## अथ शौडादयो गड्यन्ता द्वाशीतिः परस्मैभाषाः ॥

शौडृ*, गर्वे । यौडृ†, सम्बन्धने । म्लेडृ ‡, मेडृ, म्रेडृ, उन्मादे । कटे, वर्षावरणयोः । चटे, इत्येके । अट, पट, गतौ । रट, परिभाषणे । लट, बाल्ये । शट, रुजाविशरणगत्यवसादनेषु । वट, वेष्टने । किट, खिट, त्रासे । शिट, षिट, अनादरे । जट, झट, संघाते । भट, भृतौ । तट, उच्छ्राये । खट, काङ्क्षायाम् । णट, × नृतौ । पिट, शब्दसंघातयोः । हट, दीप्तौ च । षट, अवयवे । लुट, विलोडने । [ डान्तोऽयमित्येके ] । चिट, परप्रैष्ये । विट, शब्दे । बिट, आक्रोशे । हिट, इत्येके । इट, किट, कटी, गतौ । मडि, भूषायाम् । कुडि, वैकल्ये । मुट, पुट+, मर्दने । चुडि, अल्पीभावे । मुडि, खण्डने । पुडि, चेत्येके । रुटि, लुटि, स्तेये । रुठि, लुठि, इत्येके [ रुडि, लुडि, इत्यपरे ] । स्फुटिर, विशरणे । [ स्फुटि इत्यपि केचित् ] । पट, व्यक्तायां वाचि । वठ, स्थौल्ये । मठ, मदनिवासयोः । कठ, कृच्छ्रजीवने । रठ, परिभाषणे । [रट इत्येके] । हठ, प्लुतिशठत्वयोः । बलात्कार इत्येके । रुठ, लुठ, उठ, उपघाते । ऊठ इत्येके । पिठ, हिंसासंक्लेशनयोः । शठ, कैतवे च । शुठ, प्रतिघाते । शुठीत्येके । कुठि, च । लुठि, आलस्ये प्रतिघाते च । शुठि, शोषणे । रुठि, लुठि, गतौ । चुड्ड, भावकरणे । अड्ड, अभियोगे । कड्ड, कार्कश्ये । क्रीडृ, विहारे । तुडृ, तोडने । तूडृ, इत्येके । हुडृ, हूडृ, होडृ, गतौ । रौडृ, अनादरे । रोडृ, लोडृ, उन्मादे । अड, उद्यमने । लड, विलासे ।

---

* शौटृ ॥ † यौटृ ॥ इति पाठान्तरम् ॥आख्या० पृ० ४२ ॥

‡ म्लेटृ । इत्याख्यातिके पाठः, पृ० ४२ ॥

× नट, नृतौ ॥ इति पाठा० ॥ + मुड, प्रुड, इति पाठा० ॥ सं० ॥

[ लल, इत्येके ]। कड, मदे। कडि, इत्येके । गडि, वदनैकदेशे ॥ इत्युदात्ता उदात्तेतः ॥

अथ पवर्गीयान्तास्तिपादयः ष्टुभ्यन्ताश्चत्वारिंशदात्मनेभाषाः ॥

तिपृ, तेपृ, ष्टिपृ, ष्टेपृ, क्षरणार्थाः। थिपृ, थेपृ, इत्यन्ये। तेपृ, कम्पने [च]। ग्लेपृ, दैन्ये। टुवेपृ, कम्पने। केपृ, गेपृ, ग्लेपृ, च। मेपृ, रेपृ, लेपृ, गतौ। हेपृ, धेपृ, च। त्रपूष्, लज्जायाम्। कपि, चलने। रबि, लबि, अबि, शब्दे। लबि अवस्रंसने च। कबृ, वर्णे। क्लीबृ, अधार्ष्ट्ये। क्षीबृ, मदे। शीभृ, कत्थने। चीभृ, च। रेभृ, शब्दे। अभि, रभि, इत्येके। ष्टभि, स्कभि, प्रतिबन्धे। जभी, जृभि, गात्रविनामे। शल्भ, कत्थने। वल्भ, भोजने। गल्भ धार्ष्ट्ये। श्रम्भु, प्रमादे। [ दन्त्यादिश्च ]। ष्टुभु, स्तम्भे। इति तिपिवर्जमुदात्ता अनुदात्तेतः ॥

अथ गुपादयः शुम्भ्यन्ता एकचत्वारिंशत्परस्मैभाषाः * ॥

गुपू, रक्षणे। धूप, संतापे। जप, जल्प, व्यक्तायां वाचि। जप, मानसे च। चप, सान्त्वने। षप, समवाये। रप, लप, व्यक्तायां वाची। चुप, मन्दायां गतौ। तुप, तुम्प, त्रुप, त्रुम्प, तुफ, तुम्फ, त्रुफ, त्रुम्फ, हिंसार्थाः। पर्प, रफ, रफि, अर्ब, पर्ब, लर्ब, वर्ब, मर्ब, कर्ब, खर्ब, गर्ब, शर्ब, षर्ब, चर्ब, गतौ। चर्ब, अदने च। कुबि, आच्छादने। लुबि, तुबि, अर्दने। चुबि, वक्त्रसंयोगे। षृभु, षृम्भु, हिंसार्थौ। षिभु, षिम्भु, इत्येके। शुभ, शुम्भ, भाषणे। [ भासने इत्येके ]। हिंसायामित्यन्ये। इत्युदात्ता उदात्तेतः ॥

---

* द्वाचत्वारिंशत्परस्मैभाषाः ॥ आख्या० पृ० ३८ ॥ सं० ॥

अथाऽनुनासिकान्ता घिण्यादयो दशात्मनेभाषाः ॥

घिणि, घुणि, घृणि, ग्रहणे। घुण, घूर्ण, भ्रमणे। पण, व्यवहारे स्तुतौ च। पन, च। भाम, क्रोधे। क्षमूष्, सहने। कमु, कान्तौ। इति घिण्यादय उदात्ता अनुदात्तेतः॥

अथाणादयः क्रम्यन्तास्त्रिंशत्परस्मैभाषाः * ॥

अण, रण, वण, भण, मण, कण, क्वण, व्रण, भ्रण, ध्वण, शब्दार्थाः। [धण इत्येके]। ओणृ, अपनयने। शोणृ, वर्णगत्योः। श्रोणृ, संघाते। श्लोणृ च। पैणृ, गतिप्रेरणश्लेषणेषु। ध्रण, वर्ण†, शब्दे। कनी, दीप्तिकान्तिगतिषु। ष्टन, वन, शब्दे। वन, षण, संभक्तौ। अम, गत्यादिषु। द्रम, हम्म, मीमृ, गतौ। मीमृ शब्दे च। चमु, छमु, जमु, झमु, अदने। जिमु, इत्येके। क्रमु, पादविक्षेपे। इत्युदात्ता उदात्तेतः॥

अथायादयो रेवत्यन्ता सप्तत्रिंशदात्मनेभाषाः ॥

अय, वय, पय, मय, चय, तय, णय, गतौ। णय, रक्षणे च। दय, दानगतिरक्षणहिंसादानेषु। रय, गतौ। ऊयी, तन्तुसन्ताने। पूयी, विशरणे दुर्गन्धे च। क्नूयी, शब्दे उन्दे च। क्ष्मायी, विधूनने। स्फायी, ओप्यायी, वृद्धौ। तायृ, सन्तानपालनयोः। शल, चलनसंवरणयोः। वल, वल्ल, संवरणे संचलने ‡ च। मल, मल्ल, धारणे। भल, भल्ल, परिभाषणहिंसादानेषु। कल, शब्दसंख्यानयोः। कल्ल, अव्यक्ते शब्दे। तेवृ, देवृ, देवने। षेवृ, गेवृ, ग्लेवृ, पेवृ, मेवृ, म्लेवृ, सेवने। शेवृ,

---

* द्वात्रिंशत्परस्मैभाषाः॥ आख्या० पृ० ४६॥

† ध्वण शब्दे। रण इत्यपि केचित्॥ इति पाठान्तरम्॥

‡ संचरणे च॥ आख्या० पृ० ४८॥ सं०॥

खेवृ, केवृ*, इत्येके । रेवृ, प्लवगतौ । इत्युदात्ता अनुदात्तेतः ॥

अथ मव्यादयोऽवत्यन्ताः सप्तनवतिः † परस्मैभाषाः ॥

[ मव्य, बन्धने ] । सूर्क्ष्य, ईर्क्ष्य, ईर्ष्य, इर्ष्यार्थाः । हय, गतौ । शुच्य, चुच्य, अभिषवे । हर्य्य, गतिकान्त्योः । अल, भूषणपर्याप्तिवारणेषु । ञिफला, विशरणे । मील, श्मील, स्मील, क्ष्मील, निमेषणे । पील, प्रतिष्टम्भे । नील, वर्णे । शील, समाधौ । कील, बन्धने । कूल, आवरणे । शूल, रुजायाम् संघाते ‡ च । तूल, निष्कर्षे । पूल, संघाते । मूल, प्रतिष्ठायाम् । फल, निष्पत्तौ । चुल्ल, भावकरणे । फुल्ल, विकसने । चिल्ल, शैथिल्ये भावकरणे च । तिल, तिल्ल, गतौ । वेलृ, चेलृ, केलृ, खेलृ, क्ष्वेलृ, वेल्ल, चलने । पेलृ, फेलृ, खेलृ, षेलृ, शेलृ, गतौ । स्खल, संचलने । खल, संचये । गल, अदने । षल, गतौ । दल, विशरणे । श्वल, श्वल्ल, आशुगमने । खोलृ, खोर्ऋ, गतिप्रतिघाते । धोर्ऋ, गतिचातुर्य्ये । त्सर, छद्मगतौ । क्मर, हूर्छने । अभ्र, वभ्र, मभ्र, चर, गत्यर्थाः । चर भक्षणे च । ष्ठिवु, निरसने । जि, जये । जीव, प्राणधारणे । पीव, मीव, तीव, णीव, स्थौल्ये । क्षिवु, क्षेवु, निरसने । उर्वी, तुर्वी, थुर्वी, दुर्वी, धुर्वी, हिंसार्थाः । गुर्वी, उद्यमने । मुर्वी, बन्धने । पुर्व×, पर्व, मर्व, पूरणे । चर्व, अदने । भर्व, हिंसायाम् । कर्व, खर्व, गर्व, दर्पे । अर्व, शर्व, षर्व, हिंसायाम् । इवि, व्याप्तौ । पिवि, मिवि, णिवि, सेवने । सेचने चेत्येके । हिवि, दिवि, धिवि,

* क्खेवृ ॥ इति पाठान्तरम् ॥

† एकनवतिः । इति आख्या० पृ० २६ ॥

‡ संघोषे च ॥ इति पाठान्तरम् ॥

× पूर्व ॥ इति पाठान्तरम् ॥ सं० ॥

जिवि, प्रीणनार्थाः । रिवि, रवि, धवि, गत्यर्थाः । कृवि, हिंसाकरणयोश्च । मव, बन्धने । अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु । इति जयतिवर्जमुदात्ता उदात्तेतः ॥

धावु, गतिशुद्ध्योः । उदात्तः स्वरितेदुभयतोभाषः ॥

अथोष्मान्ताः ॥

तत्र धुक्षादयो घुष्यन्ता द्विपञ्चाशदात्मनेभाषाः ॥

धुक्ष, धिक्ष, सन्दीपनक्लेशनजीवनेषु । वृक्ष, वरणे । शिक्ष, विद्योपादाने । भिक्ष, भिक्षायामलाभे लाभे च । क्लेश, अव्यक्तायां वाचि बाधने च । दक्ष, वृद्धौ शीघ्रार्थे च । दीक्ष, मौण्ड्येज्योपनयननियमव्रतादेशेषु । ईक्ष, दर्शने । ईष, गतिहिंसादर्शनेषु । भाष, व्यक्तायां वाचि । वर्ष, स्नेहने । गेषृ, अन्विच्छायाम् । ग्लेषृ, इत्यन्ये । पेषृ, प्रयत्ने । जेषृ *, णेषृ, एषृ, प्रेषृ, गतौ । रेषृ, हेषृ, ह्लेषृ, अव्यक्ते शब्दे । कासृ, शब्दकुत्सायाम् । भासृ, दीप्तौ । णासृ, रासृ, शब्दे । णस, कौटिल्ये । भ्यस, भये । आङः शसि, इच्छायाम् । ग्रसु, ग्लसु, अदने । ईह, चेष्टायाम् । वहि, महि, वृद्धौ । अहि, गतौ । गर्ह, गल्ह, कुत्सायाम् । बर्ह, बल्ह, प्राधान्ये । वर्ह, वल्ह, परिभाषणहिंसाच्छादनेषु । प्लिह, गतौ । वेहृ, जेहृ, बाहृ, प्रयत्ने । [ जेहृ गतावपि ] । द्राहृ, निद्राक्षये । निक्षेप इत्येके । काशृ, दीप्तौ । ऊहृ, वितर्के । गाहू, विलोडने । गृहू, ग्लहू †, ग्रहणे । घुषि, कान्तिकरणे । [ घष इति केचित् ] ॥ इत्युदात्ता अनुदात्तेतः ॥

---

* चेषृ ॥ इति पाठान्तरम् ॥

† ग्लह, च ॥ आख्या० पृ० ७० ॥ सं० ॥

अथ घुषिरादयोऽर्हत्यन्ता एकनवतिः परस्मैभाषाः ॥

घुषिर्, अविशब्दने । अक्षू, व्याप्तौ । तक्षू, त्वक्षू, तनूकरणे । उक्ष, सेचने । रक्ष, पालने । णिक्ष, चुम्बने । तृक्ष, षृक्ष*, णक्ष, गतौ । वक्ष, रोषे । संघात इत्येके । मृक्ष, संघाते । म्रक्ष इत्येके । तक्ष, त्वचने । पक्ष परिग्रह इत्येके । सूर्क्ष‡, आदरानादरयोः । काक्षि, वाक्षि, माक्षि, काङ्क्षायाम् । द्राक्षि, ध्राक्षि, ध्वाक्षि, घोरवासिते च । चूष, पाने । तूष, तुष्टौ । पूष, वृद्धौ । मूष, स्तेये । लूष, रूष, भूषायाम् । शूष, प्रसवे । यूष, हिंसायाम् । जूष च । भूष, अलङ्कारे । ऊष, रुजायाम् । ईष, उञ्छे । कष, खष, शिष, जष, झष, शष, वष, मष, रुष, रिष, हिंसार्थाः । भष, भर्त्सने । उष, दाहे । जिषु, विषु, मिषु, सेचने । पुष, पुष्टौ । श्रिषु, श्लिषु, प्रुषु, प्लुषु, दाहे । पृषु, वृषु, मृषु, सेचने । मृषु सहने च । इतरौ हिंसासंक्लेशनयोश्च । घृषु, संघर्षणे । हृषु, अलीके । तुस, ह्रस, ह्लस, रस, शब्दे । लष, श्लेषणक्रीडनयोः । घस्लृ, अदने । जर्ज, चर्च, झर्झ, परिभाषणहिंसातर्जनेषु । पिसृ, पेसृ, गतौ । हसे, हसने । णिश, समाधौ । मिश, मश, शब्दे रोषकृते च । शव, गतौ । शश, प्लुतगतौ । शसु, हिंसायाम् । शंसु, स्तुतौ । [ दुर्गतावित्येके ] । चह, परिकल्कने । मह, पूजायाम् । रह, त्यागे । रहि, गतौ । दृह, दृहि, बृह, बृहि, वृद्धौ । बृहि शब्दे च । बृहिर् इत्येके । तुहिर्, दुहिर्, उहिर्, अर्दने । अर्ह, पूजायाम् ॥ इत्युदात्ता उदात्तेतः ॥

अथ द्युतादयः कृपूपर्यन्ताः पञ्चत्रिंशतिरात्मनेभाषाः ॥

द्युत, दीप्तौ । श्विता, वर्णे । ञिमिदा, स्नेहने । ञिष्विदा,

* स्तृक्ष इति पाठा० ॥ सृक्ष, इत्याख्यातिके ॥

‡ सूर्क्ष्य, आदरे । आख्या० पृ० ७३ ॥ सं० ॥

स्नेहनमोचनयोः । [ मोहनयोरित्येके ] । ञिदिवदा चेत्येके । रुच, दीप्तावभिप्रीतौ च । घुट, परिवर्त्तने । रुट, लुट, लुठ, [ उठ ], उपघाते* । शुभ, दीप्तौ । क्षुभ, संचलने । णभ, तुभ, हिंसायाम् । [ आद्योऽभावेपि ] । स्रन्सु, ध्वंसु, भ्रंसु, अवस्रन्सने । ध्वंसु गतौ च । [ शुभ इत्यपि केचित् ] । भ्रशु, भ्रंशु, अधःपतने । स्रम्भु विश्वासे । वृतु, वर्त्तने । वृधु, वृद्धौ । शृधु, शब्दकुत्सायाम् । स्यन्दू, प्रस्रवणे । कृपू, सामर्थ्ये ॥ वृत् ॥ † इति द्युतादय उदात्ता अनुदात्तेतः ॥

अथ घटादयस्त्वरत्यन्ताः षोडशात्मनेभाषाः ॥

घट, चेष्टायाम् । व्यथ, भयसंचलनयोः । प्रथ, प्रख्याने । प्रस, विस्तारे । म्रद, मर्दने । स्खद, स्खदने । क्षजि, गतिदानयोः । दक्ष, गतिहिंसनयोः । क्रप, कृपायां गतौ च । कदि, क्रदि, क्लदि, वैक्लव्ये । वैकल्य इत्येके । कद, क्रद, क्लद, इत्यन्ये । ञित्वरा, संभ्रमे ॥ इति घटादय उदात्ता अनुदात्तेतः ॥

अथ ज्वरादयः फणाऽन्ताः सप्तपञ्चाशत् परस्मैभाषाः ॥

ज्वर, रोगे । गड, सेचने । हेड, वेष्टने । वट, भट, परिभाषणे । णट, नृतौ । [ गतावित्यन्ये ] । ष्टक, प्रतीघाते । चक, तृप्तौ । कखे, हसने । रगे, शङ्कायाम् । लगे, सङ्गे । ह्रगे, ह्लगे, षगे, संवरणे । कगे, नोच्यते । क्रियासामान्यार्थत्वात् । अनेकार्थत्वादित्यन्ये । अक, अग, कुटिलायां गतौ । कण, रण, गतौ । चण, शण, श्रण, दाने च । शण गतावित्यन्ये । श्रथ, श्लथ, क्नथ, क्लथ, हिंसार्थाः । चन च । वनु च, नोच्यते । ज्वल, दीप्तौ । ह्वल, ह्मल, संचलने । स्मृ, आध्याने ।

* प्रतिघाते ॥ इति पाठा० ॥ सं० ॥ † सम्पूर्णो द्युतादिर्वृतादिश्चेत्यर्थः ॥

दॄ, भये । नॄ, नये । श्रा, पाके । मारणतोषणनिशामनेषु 'ज्ञा' । कम्पने 'चलिः' । छदिर्, ऊर्जने । जिह्वोन्मथने 'लडिः' । मदी, हर्षग्लेपनयोः । ध्वन, शब्दे । दलि, वलि, स्खलि, रणि, ध्वनि, त्रपि, क्षपयश्च । स्वन, अवतंसने * । घटादयो मितः । जनी-जॄष्-क्नसु-रञ्जो-ऽमन्ताश्च । ज्वल-ह्वल-ह्मल-नमामनुपसर्गाद्वा । ग्ला-स्ना-वनु-वमां-च । न-कम्यू-अमि-चमाम् । शमो, दर्शने । यमो, ऽपरिवेषणे । 'स्खदिर्' अवपरिभ्यां च । फण, गतौ ॥ वृत् ॥ † । इति ज्वरादय उदात्ता उदात्तेतः ॥

राजृ, दीप्तौ । उदात्तः स्वरितेदुभयतोभाषः ॥

टुभ्राजृ, टुभ्राशृ, टुभ्लाशृ, दीप्तौ । उदात्ता अनुदात्तेत आत्मनेभाषाः ॥

अथ स्यमादयः क्षुरत्यन्ताः सप्तविंशतिः ‡ परस्मैभाषाः ॥

स्यमु, स्वन, ध्वन, शब्दे । षम, ष्टम, अवैक्लव्ये । ज्वल, दीप्तौ । चल, कम्पने । जल, घातने । टल, ट्वल, वैक्लव्ये । ष्टल, स्थाने । हल, विलेखने । णल, गन्धे । बन्धन इत्येके । पल, गतौ । बल, प्राणने धान्यावरोधे च । पुल, महत्वे । कुल, संस्त्याने बन्धुषु च । शल, हुल, पत्लृ, गतौ । क्वथे, निष्पाके । पथे, गतौ । मथे, विलोडने । टुवम, उद्गिरणे । भ्रमु, चलने । क्षर, संचलने । क्षुर, संचये । इति स्यमादय उदात्ता उदात्तेतः ॥

अथ द्वावनुदात्तेतौ ॥

षह, मर्षणे । उदात्तोऽनुदात्तेत् ॥

रमु, क्रीडायाम् । अनुदात्तोऽनुदात्तेत् ॥

---

* अवतंसने । इति पाठा० ॥ † घटादिर्गणः समाप्तः ॥

‡ षड्विंशतिः ॥ श्राख्या० पृ० ८४ । तत्र न दृश्यते क्षुर, सञ्चये इति ॥ सं० ॥

## अथ षदादयः क्रसन्ताः सप्त परस्मैभाषाः ॥

षद्लृ, विशरणगत्यवसादनेषु । शद्लृ, शातने । क्रुश, आह्वाने रोदने च । कुच, सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । बुध, अवगमने । रुह, बीजजन्मनि प्रादुर्भावे च । कस, गतौ । कुचादय उदात्ता उदात्तेतो रुहिस्त्वनुदात्तः ॥ वृत् ॥ इति ज्वलादिर्गणः ॥

## अथ हिक्कादयो गूहत्यन्ताः पञ्चचत्वारिंशदुभयतोभाषाः * ॥

हिक्क, अव्यक्ते शब्दे । अञ्चु, गतौ याचने च । अचु इत्येके । अचि इत्यपरे । टुयाचृ, याच्ञायाम् । रेट्ट, परिभाषणे । चते, चदे, याचने । प्रोथृ, पर्याप्तौ । मिद्द, मेद्द, मेधाहिंसनयोः । [ मिधृ ], मेधृ, संगमे च । मिथृ, मेथ, मेधाहिंसनयोरित्येके । मिधृ मेधृ इत्यन्ये । णिद्द, णेद्द, कुत्सासन्निकर्षयोः । शृधु, मृधु, उन्दने । बुधिर्, बोधने । उबुन्दिर्, निशामने । वेणृ, गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । वेनृ इत्येके । खनु, अवदारणे । चीवृ, आदानसंवरणयोः । चायृ, पूजानिशामनयोः । व्यय, गतौ । दाशृ, दाने । भेषृ, भये । गतावित्येके । भ्रेषृ, भ्लेषृ, गतौ । अस, गतिदीप्त्यादानेषु । अष इत्येके । स्पश, बाधनस्पर्शयोः । लष, कान्तौ । चष, भक्षणे । छष, हिंसायाम् । झष, आदानसंवरणयोः । भ्रक्ष, भ्लक्ष, अदने । ‡लक्ष, च । दासृ, दाने । माहृ, माने । गुहू, संवरणे ॥ इति हिक्कादय उदात्ताः स्वरितेतः ॥

## अथाऽजन्ताः श्रिञादयो नयत्यन्ताः पञ्चोभयतोभाषाः ॥

श्रिञ्, सेवायाम् । उदात्तः स्वरितेत् । भृञ्, भरणे ।

---

* स्वरितेतोऽष्टात्रिंशत् ॥ आख्या० पृ० ८८ ॥

‡ भक्ष इत्येके ॥ आख्या० पृ० ६० ॥ सं० ॥

हृञ्; हरणे। धृञ्, धारणे। णीञ्, प्रापणे। इति भरत्यादयोऽनुदात्ताः स्वरितेतः॥

## अथ धेटादयो जयत्यन्ताः षट्चत्वारिंशत्परस्मैभाषाः॥

धेट्, पाने। ग्लै, म्लै, हर्षक्षये। द्यै, न्यक्करणे। द्रै, स्वप्ने। ध्रै, तृप्तौ। ध्यै, चिन्तायाम्। रै, शब्दे। स्त्यै, ष्ट्यै, शब्दसंघातयोः। खै, खदने। क्षै, जै, षै, क्षये। कै, गै, शब्दे। शै, श्रै, पाके। पै, ओवै, शोषणे। ष्टै, वेष्टने। ष्णै, वेष्टने शोभायां चेत्येके। दैप्, शोधने। पा, पाने। घ्रा, गन्धोपादाने। ध्मा, शब्दाग्निसंयोगयोः। ष्ठा, गतिनिवृत्तौ। म्ना, अभ्यासे। दाण्, दाने। ह्वृ, कौटिल्ये। स्वृ, शब्दोपतापयोः। स्मृ, चिन्तायाम्। वृ, संवरणे। सृ, गतौ। ऋ, गतिप्रापणयोः। गृ, घृ, सेचने। ध्वृ, हूर्छने। स्रु, गतौ। षु, प्रसवैश्वर्ययोः। श्रु, श्रवणे। ध्रु, स्थैर्ये। दु, द्रु, गतौ। जि, ज्रि, अभिभवे॥ इति धेटादयोऽनुदात्ताः॥

## अथ ष्मिङादयो डीङन्ता ङितः सप्तविंशति* रात्मनेभाषाः॥

ष्मिङ्, ईषद्धसने। गुङ्, अव्यक्ते शब्दे। गाङ्, गतौ। कुङ्, घुङ्, उङ्, ङुङ्, शब्दे। कुङ्, खुरुङ्, गुङ्, ङुङ्, चेत्याहुरन्ये। च्युङ्, ज्युङ्, जुङ्, प्रुङ्, प्लुङ्, गतौ†। क्लुङ् इत्येके। रुङ्, गतिरेषणयोः। धृङ्, अवध्वंसने। मेङ्, प्रणिदाने। देङ्, रक्षणे। श्यैङ्, गतौ। प्यैङ्, वृद्धौ। त्रैङ्, पालने॥ इति ष्मिङ्प्रभृतयोऽनुदात्ताः॥

पूङ्, पवने। मूङ्, बन्धने। डीङ्, विहायसा गतौ॥ इति पूङादय उदात्ताः॥

---

* त्रयोविंशतिः। इति आख्यातिके॥ † आख्यातिक व अन्य धातुपाठों में पाठ और प्रकार से है॥ सं०॥

तॄ, प्लवनसंतरणयोः । उदात्तः परस्मैभाषः ॥

अथ गुपादयो दहत्यन्ता अष्टावात्मनेभाषाः ॥

गुप, गोपने । तिज, निशाने । मान, पूजायाम् । बध, बन्धने । गुपादयश्चत्वार उदात्ता अनुदात्तेतः ॥

रभ, राभस्ये । डुलभष्, प्राप्तौ । ष्वञ्ज, परिष्वङ्गे । हद, पुरीषोत्सर्गे । रभादयश्चत्वारोऽनुदात्ता अनुदात्तेतः ॥

अथ ष्विदादयो मेहत्यन्ताः पञ्चदश परस्मैभाषाः ॥

ञिष्विदा, अव्यक्ते शब्दे । उदात्तः । स्कन्दिँर्, गतिशोषणयोः । यभ, मैथुने । णम्, प्रह्वत्वे शब्दे च । गम्लृ, सृप्लृ, गतौ । यम, उपरमे । तप, सन्तापे । त्यज, हानौ । षञ्ज, सङ्गे । दृशिर्, प्रेक्षणे । दंश, दशने । कृष, विलेखने । दह, भस्मीकरणे । मिह, सेचने । स्कन्दादयोऽनुदात्ताः ॥ इति ष्विदादय उदात्तेतः ॥

अथैकः परस्मैभाषः ॥

कित, निवासे रोगापनयने च । उदात्तेत् * ॥

अथ द्वावुभयतोभाषौ ॥

दान, खण्डने । शान, तेजने । स्वरितेतौ ॥

अथ पचादयो वहत्यन्ता नवोभयतोभाषाः ॥

डुपचष्, पाके । षच, समवाये । भज, सेवायाम् । रञ्ज, रागे । शप, आक्रोशे । त्विष, दीप्तौ । यज, देवपूजासंगतिकरणदानेषु । डुवप्, बीजसन्ताने छेदने च । वह, प्रापणे । इति पचादयोऽनुदात्ताः स्वरितेतः सचतिस्तूदात्तः ॥

* यह धातु सेट् परस्मैपदी है, परन्तु कोई २ इसे आत्मनेपदी भी कहते हैं ॥ आख्या० पृ० ११० ॥ सं० ॥

अथैकः परस्मैभाषः ॥

वस, निवासे । उदात्तेदनुदात्तः ॥

अथ व्येञादयस्त्रय उभयतोभाषाः ॥

वेञ्, तन्तुसन्ताने । व्येञ्, संवरणे । ह्वेञ्, स्पर्द्धायां शब्दे च । व्येञादयोऽनुदात्ताः ॥

अथ द्वौ परस्मैभाषौ ॥

वद, व्यक्तायां वाचि । टुओश्वि, गतिवृद्ध्योः । इत्युदात्तौ ॥ वृत् ॥ इति यजादिर्गणः समाप्तः ॥

इति शब्विकरणा भ्वादयः समाप्ताः ॥

अथाऽदादिर्गणः ॥

अथ द्वौ परस्मैभाषौ ॥

अद, भक्षणे । हन, हिंसागत्योः । अनुदात्तावुदात्तेतौ ॥

अथ चत्वार उभयतोभाषाः ॥

द्विष, अप्रीतौ । दुह, प्रपूरणे । दिह, उपचये । लिह, आस्वादने । द्विषादयोऽनुदात्ताः स्वरितेतः ।

अथैक आत्मनेभाषः ॥

चक्षिङ्, व्यक्तायां वाचि । अयं दर्शनेऽपि । अनुदात्तोऽनुदात्तेत् ॥

अथ पृच्यन्ताः * षोडशात्मनेभाषाः ॥

ईर, गतौ कम्पने च । ईड, स्तुतौ । ईश, ऐश्वर्ये । आस,

* त्रयोदश इत्याख्यातिके ॥ सं० ॥

उपवेशने । आङः शासु, इच्छायाम् । वस, आच्छादने । कसि, गतिशासनयोः । कस इत्येके । कश इत्यन्ये । णिसि, चुम्बने । णिजि, शुद्धौ । शिजि, अव्यक्ते शब्दे । पिजि, वर्णे । [ संपर्चने इत्येके । उभयत्रेत्यन्ये । अवयव इत्यपरे । अव्यक्ते शब्द इतीतरे ] पृजीत्येके । वृजी, वर्जने । [ वृजि इत्येके ] । पृची, संपर्चने । इतीरादय उदात्ता अनुदात्तेतः ॥

अथ द्वावात्मनेभाषौ ॥

षूङ्, प्राणिगर्भविमोचने । शीङ्, स्वप्ने । उदात्तौ ॥

अथ पञ्च परस्मैभाषाः ॥

यु, मिश्रणे अमिश्रणे च । णु, स्तुतौ । रु, शब्दे । टुक्षु, शब्दे । क्ष्णु, तेजने । इत्युदात्ता उदात्तेतः ॥

अथैक उभयतोभाषः ॥

ऊर्णुञ्, आच्छादने । उदात्तः ॥

अथ पञ्च परस्मैभाषाः ॥

ष्णु*, प्रस्रवणे । द्यु, अभिगमने । षु, प्रसवैश्वर्ययोः । कु, शब्दे । तु, गतिवृद्धिहिंसासु । इत्यनुदात्ता उदात्तेतः ॥

अथ द्वावुभयतोभाषौ ॥

ष्टुञ्, स्तुतौ । ब्रूञ्, व्यक्तायां वाचि । इत्यनुदात्तौ ॥

अथैकोनविंशतिः परस्मैभाषा इङ्त्वात्मनेभाषः ॥

इण्, गतौ । इङ्, अध्ययने । इक्, स्मरणे । वी, गति-

* आख्यातिक तथा अन्य धातुपाठों में इसे 'युप्रभृति' ६ धातुओं में गिना है ? सेट् होने से इसकी गणना वहीं होनी चाहिये, यहां अनिट् धातुओं में नहीं ॥ सं० ॥

ख्यातिप्रजनकान्त्यसनखादनेषु । या, प्रापणे । वा, गतिगन्धनयोः । भा, दीप्तौ । ष्णा, शौचे । श्रा, पाके । द्रा, कुत्सायां गतौ च । प्सा, भक्षणे । पा, रक्षणे । रा, दाने । ला, आदाने । [ द्वावपि दाने इति चन्द्रः ] । दाप्, लवने । ख्या, प्रकथने । प्रा, पूरणे । मा, माने । वच, परिभाषणे । इत्यनुदात्ता उदात्तेतः ॥

अथ चत्वारः परस्मैभाषाः ॥

विद, ज्ञाने । अस, भुवि । मृजूष्, शुद्धौ । रुदिर्, अश्रुविमोचने । इत्युदात्ता उदात्तेतः ॥

अथैकः परस्मैभाषः ॥

ञिष्वप्, शये । उदात्तेदनुदात्तः ॥

अथ सप्त परस्मैभाषाः ॥

श्वस, प्राणने । अन, च । जक्ष, भक्षहसनयोः । [ वृत ] । जागृ, निद्राक्षये । दरिद्रा, दुर्गतौ । चकास, दीप्तौ । शासु, अनुशिष्टौ । इत्युदात्ता उदात्तेतः ॥

अथ द्वावात्मनेभाषौ ॥

दीधीङ्, दीप्तिदेवनयोः । वेवीङ्, वेतिना तुल्ये । इत्युदात्तौ ॥

अथ त्रयः परस्मैभाषाः ॥

षस, सस्ति, स्वप्ने । वश, कान्तौ । इत्युदात्ता उदात्तेतः । चर्करीतञ्च * । तं च [ ? ] ॥

* इस [गणसूत्र के] निर्देश से यङ्लुगन्त धातुओं से परस्मैपद और शप् का लुक् होता है । सो यङ्लुगन्त प्रक्रिया का विषय है ॥

आख्या० पृ० १४० ॥ सं० ॥

## अथैक आत्मनेभाषः ॥

ह्नुङ्, अपनयने । इत्यनुदात्तः ॥

## इति लुग्विकरणा अदादयः ॥



## अथ जुहोत्यादिर्गणः ॥

## अथ त्रयः परस्मैभाषाः ॥

हु, दानादनयोः । आदाने चेत्येके । ञिभी, भये । ह्री, लज्जायाम् । जुहोत्यादयोऽनुदात्ताः ॥

## अथैकः परस्मैभाषः ॥

पृ, पालनपूरणयोः । उदात्तः । ह्रस्वान्तोयमित्येके ॥

## अथैक उभयतोभाषः ॥

डुभृञ्, धारणपोषणयोः । अनुदात्तः ॥

## अथ द्वावात्मनेभाषौ ॥

माङ्, माने शब्दे च । ओहाङ्, गतौ । [ अनुदात्तौ ] ॥

## अथैकः परस्मैभाषः ॥

ओहाक्, त्यागे । अनुदात्तः ॥

## अथ द्वावुभयतोभाषौ ॥

डुदाञ्, दाने । डुधाञ्, धारणपोषणयोः* । अनुदात्तौ ॥

* दाने इत्यप्येके । इति पुस्तकान्तरेषु ॥ सं० ॥

## अथ त्रय उभयतोभाषाः ॥

णिजिर्, शौचपोषणयोः । विजिर्, पृथग्भावे । विष्लृ, व्याप्तौ । इति णिजादयोऽनुदात्ताः स्वरितेतः ॥

## अथ गणान्ताः परस्मैभाषाश्छान्दसाश्चैकादश । [ इयर्तिः भाषायामपि ] ॥

घृ, क्षरणदीप्त्योः । हृ, प्रसह्यकरणे । ऋ, सृ, गतौ । इति घ्रादयश्चत्वारोऽनुदात्ताः ॥

भस, भर्त्सनदीप्त्योः । उदात्त उदात्तेत् । कि, ज्ञाने । अनुदात्तः । तुर, त्वरणे । धिष, शब्दे । धन, धान्ये । जन, जनने । तुराद्य उदात्ता उदात्तेतः । गा, स्तुतौ । अनुदात्तः । छन्दसि ॥ वृत् ॥ इति श्लुविकरणा जुहोत्यादयः ॥



## अथ दिवादिर्गणः ॥

## अथ दिवादयः षड्विंशतिः परस्मैभाषाः ॥

दिवु, क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । षिवु, तन्तुसन्ताने । स्रिवु, गतिशोषणयोः । ष्ठिवु, निरसने । ष्णुसु*, अदने । आदान इत्येके । अदर्शन इत्यपरे । ष्णसु†, निरसने । क्नसु, ह्वरणदीप्त्योः । व्युष, दाहे । प्लुष, च । नृती, गात्रविक्षेपे । त्रसी, उद्वेगे । कुथ, पूतीभावे । पुथ, हिंसायाम् । गुध, परिवेष्टने । क्षिप‡, प्रेरणे । अनुदात्तः ।

* ष्णुसु । † ष्णसु ॥ आख्यातिक पृष्ठ १४८ ॥ ‡ यह धातु अनिट् है ॥ सं० ॥

पुष्प, विकसने । तिम, तीम, ष्टिम, ष्टीम, आर्द्रीभावे । व्रीड, चोदने लज्जायाञ्च । इष, गतौ । षह, षुह, चक्यर्थे । जॄष्, झॄष्, वयोहानौ । इति दिवादय उदात्ता उदात्तेतः । [क्षिपिस्त्वनुदात्तः] ॥

अथ द्वावात्मनेभाषौ ॥

षूङ्, प्राणिप्रसवे । दूङ्, परितापे । इत्युदात्तौ ॥

अथ दीङादय एकादश आत्मनेभाषाः ॥

दीङ्, क्षये । डीङ्, विहायसा गतौ । धीङ्, आधारे । मीङ्, हिंसायाम् । रीङ्, श्रवणे । लीङ्, श्लेषणे । व्रीङ्, वृणोत्यर्थे ॥ वृत् ॥ स्वादय ओदितः । पीङ्, पाने । माङ्, माने । ईङ्, गतौ । प्रीङ्, प्रीणने । इति दीङादय अनुदात्ता डीङ्तूदात्तः ॥

अथ चत्वारः परस्मैभाषाः ॥

शो, तनूकरणे । छो, छेदने । षो, अन्तकर्मणि । दो, अवखण्डने । श्यतिप्रभृतयोऽनुदात्ताः ॥

अथ पञ्चदशात्मनेभाषाः ॥

जनी, प्रादुर्भावे । दीपी, दीप्तौ । पूरी, आप्यायने । तूरी, गतित्वरणहिंसनयोः । धूरी, गूरी, हिंसागत्योः । घूरी, जूरी, हिंसावयोहान्योः । शूरी, हिंसास्तम्भनयोः । चूरी, दाहे । तप, ऐश्वर्ये* । वावृतु, वरणे । क्लिश, उपतापे । काशृ, दीप्तौ । वाश, शब्दे । इति तपिवर्जमुदात्ता अनुदात्तेतः ॥

अथ द्वावुभयतोभाषौ ॥

मृष, तितिक्षायाम् । ईशुचिर्, पूतीभावे । उदात्तौ स्वरितेतौ ॥

---

* तप, ऐश्वर्ये वा । वृतु, वरणे । इति पुस्तकान्तरेषु ॥ सं० ॥

## अथ त्रय उभयतोभाषाः ॥

णह, बन्धने । रञ्ज, रागे । शप, आक्रोशे । इत्यनुदात्ताः स्वरितेतः ॥

## अथैकादशात्मनेभाषाः ॥

षद, गतौ । खिद, दैन्ये । विद, सत्तायाम् । बुध, अवगमने । युध, संप्रहारे । अनो रुध, कामे । अण, प्राणने । [अन इत्येके]। उदात्तः । मन, ज्ञाने । युज, समाधौ । सृज, विसर्गे । लिश, अल्पीभावे । इत्यनुदात्ता अनुदात्तेतः ॥

## अथ गणान्ता एकसप्ततिः परस्मैभाषाः ॥

राधोऽकर्मकाद्, वृद्धावेव । व्यध, ताडने । पुष, पुष्टौ । शुष, शोषणे । तुष, प्रीतौ । दुष, वैकृत्ये । श्लिष, आलिङ्गने । शक, विभाषितो मर्षणे । ञिष्विदा, गात्रप्रक्षरणे । क्रुध, क्रोधे । क्षुध, बुभुक्षायाम् । शुध, शौचे । षिधु, संराद्धौ । इत्यनुदात्ता उदात्तेतः । रध, हिंसासंराध्योः । णश, अदर्शने । तृप, प्रीणने । दृप, हर्षमोहनयोः । द्रुह, जिघांसायाम् । मुह, वैचित्त्ये । ष्णुह, उद्गिरणे । ष्णिह, प्रीतौ ॥ वृत् ॥ रधादयः । इत्युदात्ता उदात्तेतस्तृपिदृपीत्वनुदात्तौ * ॥

## अथ शमादयः ॥

शमु, उपशमे । तमु, काङ्क्षायाम् । दमु, उपशमे । श्रमु, तपसि खेदे च । भ्रमु, अनवस्थाने । क्षमूष्, सहने । क्लमु, ग्लानौ । मदी, हर्षे । इत्यष्टौ शमादयः । असु, क्षेपणे । यसु,

---

* तृप और दृप दोनों धातु अनिट् हैं परन्तु रधादि में होने से यहां विकल्प से इट् होता है ॥ व्याख्या० पृ० १४० ॥ सं० ॥

प्रयत्ने । जसु, मोक्षणे । तसु, उपक्षये । दसु, च । वसु, स्तम्भे । वादि-रित्येके । व्युष, विभागे । ओष्ठ्यादिर्दन्त्यान्तो व्युस्, इत्यन्ये । अयकारं वुस्, इत्यपरे * । प्लुष, दाहे । विस, प्रेरणे । कुस, संश्लेषणे । बुस, उत्सर्गे । मुस, खण्डने । मसी, परिणामे । समी इत्येके । लुठ, विलोडने । उच, समवाये । भृशु, भ्रंशु, अधःपतने । वृश, वरणे । कृश, तनूकरणे । ञितृष, पिपासायाम् । हृष, तुष्टौ । रुष, रिष, हिंसायाम् । डिप, क्षेपे । कुप, क्रोधे । गुप, व्याकुलत्वे । युपु, रुपु, लुपु, विमोहने । लुभ, गार्ध्ये । क्षुभ, संचलने । णभ, तुभ, हिंसायाम् । क्लिदू, आर्द्रीभावे । ञिमिदा, स्नेहने । ञिक्ष्विदा, स्नेहनमोचनयोः । ऋधु, वृद्धौ । गृधु, अभिकाङ्क्षायाम् ॥ वृत् ॥ इत्युदात्ता उदात्तेतः ॥

इति श्यन्विकरणा दिवादयः ॥

## अथ स्वादिर्गणः ॥

---

अथ स्वादयो दशोभयतोभाषाः ॥

षुञ् †, अभिषवे । षिञ्, बन्धने । शिञ्, निशाने । डुमिञ्, प्रक्षेपणे । चिञ्, चयने । स्तृञ्, आच्छादने । कृञ्, हिंसायाम् । वृञ्, वरणे । धुञ्, कम्पने । दीर्घान्तोऽपीत्येके ‡ । इति वृञ् वर्जमनुदात्ताः ॥

---

* व्युस इत्यन्ये । युस इत्यपरे । इति पुस्तकान्तरेषु ॥ † पूञ् । इति पाठा० ॥

‡ लोक वेद में सर्वत्र दीर्घान्त धूञ् धातु के प्रयोग बहुधा आते हैं और पाणिनीय ( स्वसुधूञ्० अ० ७ । २ । ७२ । ) आदि सूत्रों में दीर्घान्त ही आता है, फिर यह ठीक नहीं बनता कि किन्हीं के मत में दीर्घान्त हो, किन्तु दीर्घान्त सार्वत्रिक, और अल्पप्रयुक्त किन्हीं के मत

## अथ नव* परस्मैभाषाः ॥

टुदु, उपतापे। हि, गतौ वृद्धौ च। पृ, प्रीतौ। स्पृ, प्रीतिसेवनयोः †। प्रीतिचलनयोरित्यन्ये। स्मृ, इत्येके। आप्लृ, व्याप्तौ। शक्लृ, शक्तौ। राध, साध, संसिद्धौ। इत्यनुदात्ताः ॥

## अथ द्वावात्मनेभाषौ ॥

अशूङ्, व्याप्तौ संघाते च। ष्टिघ, आस्कन्दने। इत्युदात्तावनुदात्तेतौ ॥

## अथागस्त्यान्ताः षोडश परस्मैभाषाः ॥

तिक, तिग, गतौ च। षघ, हिंसायाम्। ञिधृषा, प्रागल्भ्ये। दम्भु, दम्भने। ऋधु, वृद्धौ। छन्दसि ‡। तृप प्रीणन इत्येके। × अह, व्याप्तौ। दघ, घातने पालने च। चमु, भक्षणे। रि, क्षि+, चिरि, जिरि, दाशृ, दृ, हिंसायाम्। इत्युदात्ता उदात्तेतः ॥ वृत् ॥

## इति श्नुविकरणाः स्वादयः ॥

---

में ह्रस्वान्त होना चाहिये [ अर्थात् धूञ्, कम्पने। धुञ्, इत्येके। ऐसा पाठ होना चाहिये ] आख्या० टिप्पणी पृष्ठ १६२ ॥ सं० ॥

* अष्टौ इत्याख्यातिके ॥ † प्रीतिपालनयोः ॥ इति पाठा० ॥

‡ यह गणसूत्र अधिकार है। यहां से आगे इस गण के अन्त पर्यन्त सब धातु वेदविषयक हैं। आख्या० पृ० १६४ ॥

× किसी के मत में प्रीणनार्थ तृप, धातु वैदिक है। आख्या० पृ० १६४ ॥

+ अयं भाषायामपीत्येके—कोई के मत में 'क्षि' धातु लौकिक भी है। ऋक्षीत्येक एवाजादिरित्यन्ये—किन्हीं के मत में रि और क्षि दो नहीं किन्तु 'ऋक्षि' अजादि अजन्त एक ही दो अक्षर का धातु है= ऋक्षिणोति ॥

आख्या० पृ० १६४ ॥ सं० ॥

# अथ तुदादिर्गणः ॥

## अथ षडुभयतोभाषाः ॥

तुद, व्यथने । णुद, प्रेरणे । दिश, अतिसर्जने । भ्रस्ज, पाके । क्षिप, प्रेरणे । कृष, विलेखने । इत्यनुदात्ताः स्वरितेतः ॥

## अथैकः परस्मैभाषः ॥

ऋषी, गतौ । उदात्त उदात्तेत् ॥

## अथ चत्वार आत्मनेभाषाः ॥

जुषी, प्रीतिसेवनयोः । ओविजी, भयचलनयोः । ओलजी, ओलस्जी, व्रीडायाम् । इत्युदात्ता अनुदात्तेतः ॥

## अथ व्रश्चादयश्चतुर्दशोत्तरशतं * परस्मैभाषाः ॥

ओव्रश्चू, छेदने । व्यच, व्याजीकरणे । उछि†, उञ्छे । उछी‡, विवासे । ऋच्छ, गतीन्द्रियप्रलयमूर्त्तिभावेषु । मिच्छ, उत्क्लेशे । जर्ज, चर्च, झर्झ, परिभाषणभर्त्सनयोः । त्वच, संवरणे । ऋच, स्तुतौ । उब्ज, आर्जवे । उज्झ, उत्सर्गे । लुभ, विमोहने । रिफ, कत्थनयुद्धनिन्दाहिंसादानेषु । रिह, इत्येके । तृप, तृम्प, तृप्तौ । तृफ, तृम्फेत्येके । तुप, तुम्प, तुफ, तुम्फ, हिंसायाम् । दृप, दृम्फ, उत्क्लेशे । दृफ, इत्यन्ये । ऋफ, ऋम्फ, हिंसायाम् । गुफ, गुम्फ, ग्रन्थे । उभ, उम्भ, पूरणे । शुभ, शुम्भ, शोभार्थे । दृभी, ग्रन्थे । [ चृती ], हिंसाग्रन्थनयोः । विध, विधाने । जुड, गतौ । जुन इत्येके । मृड,

* दशोत्तरशतमिति आख्यातिके ॥ † उछि ॥ ‡ उछी ॥ सं० ॥

सुखने । पृड, च । पृण, प्रीणने । वृण, च । मृण, हिंसायाम् । तुण, कौटिल्ये । पुण, कर्मणि शुभे । मुण, प्रतिज्ञाने । कुण, शब्दोपकरणयोः । शुन, गतौ । द्रुण, हिंसागतिकौटिल्येषु । घुण, घूर्ण, भ्रमणे । षुर, ऐश्वर्यदीप्त्योः । कुर, शब्दे । खुर, छेदने । मुर, संवेष्टने * । क्षुर, विलेखने । घुर, भीमार्थशब्दयोः । पुर, [ अग्र ] गमने । वृहू, उद्यमने । वृहू इत्येके । तृहू, स्तृहू, तृंहू, हिंसार्थाः । इषु, इच्छायाम् । मिष, स्पर्द्धायाम् । किल, श्वैत्यक्रीडनयोः । तिल, स्नेहे । चिल, वसने । चल, विलसने । इल, स्वप्नक्षेपणयोः । विल †, संवरणे । विल, भेदने । णिल, गहने । हिल, भावकरणे । शिल, षिल, उञ्छे । मिल, श्लेषणे । लिख, अक्षरविन्यासे । कुट, कौटिल्ये । पुट, संश्लेषणे । कुच, संकोचने । गुज, शब्दे । गुड, रक्षायाम् । डिप, क्षेपे । छुर, छेदने । स्फुट, विकसने । मुट, आक्षेपप्रमर्दनयोः । त्रुट, छेदने । तुट, कलहकर्मणि । चुट, छुट, छेदने । जुड, बन्धने । क्रुड, मदे । लुट, संश्लेषणे । लुठ, इत्येके । कृड, घनत्वे । कुड, वाल्ये । पुड, उत्सर्गे । घुट, प्रतिघाते । तुड, तोडने । थुड, स्थुड, संवरणे । खुड छुड इत्येके । स्फुर, स्फुरणे । स्फर इत्येके । स्फुल, संचलने । [ फुल इत्येके ] । स्फुड, चुड, व्रुड, संवरणे । क्रुड, भृड, निमज्जने ‡ । इत्युदात्ता उदात्तेतः ॥

अथैकं आत्मनेभाषः ॥

गुरी, उद्यमने । इत्युदात्तोऽनुदात्तेत् ॥

अथ पञ्च × परस्मैभाषाः ॥

* मुर, संवेष्टने । इति पाठान्तरम् ॥ † षिल । इति पाठा० ॥
‡ क्रुड, भृड, निमज्जन इत्येके । आख्या० पृ० १७० ॥
× चत्वारः । इति आख्यातिके ॥ सं० ॥

णू, स्तवने । धू, विधूनने । गु, पुरीषोत्सर्गे । ध्रु, गतिस्थैर्ययोः । ध्रुव इत्येके । इत्याद्यावुदात्तावन्त्याश्चानुदात्ताः * ॥

अथ द्वावात्मनेभाषौ † ॥

कूङ्, शब्दे । कुङ शब्द इत्येके । इत्युदात्तौ ‡ ॥ वृत् ॥

इति कुटादिगणः समाप्तः ॥

अथ द्वावात्मनेभाषौ ॥

पृङ्, व्यायामे । मृङ्, प्राणत्यागे । इत्यनुदात्तौ ॥

अथ सप्त परस्मैभाषाः ॥

---

रि, पि, गतौ । धि, धारणे । क्षि, निवासगत्योः । इत्यनुदात्ताः ॥

षू×, प्रेरणे । कॄ, विक्षेपे । गॄ, निगरणे । इत्युदात्ताः ॥

अथ द्वावात्मनेभाषौ ॥

दृङ्, आदरे । धृङ्, अवस्थाने । इत्यनुदात्तौ ॥

अथ षोडश परस्मैभाषाः

प्रच्छ, ज्ञीप्सायाम् ॥ वृत् ॥ किरादयो वृतः ॥

सृज, विसर्गे । टुमस्जो, शुद्धौ । रुजो, भङ्गे । भुजो,

---

* ध्रुव धातु तो सेट् है । आख्या० पृ० १७१ ॥

† अथैक आत्मनेपदी । आख्या० पृ० १७१ ॥

‡ यह धातु दीर्घान्त पक्ष में सेट् और ह्रस्वान्त पक्ष में अनिट् है । आख्या० पृ० १७१ ॥

× पु । आख्या० पृ० १७२ ॥ सं० ॥

कौटिल्ये । छुप, स्पर्शे । रुश, रिश, हिंसायाम् । लिश, गतौ । स्पृश, संस्पर्शने । विच्छ, गतौ । विश, प्रवेशने । मृश, आमर्शने । णुद, प्रेरणे । षद्लृ, विशरणगत्यवसादनेषु । शद्लृ, शातने । इत्यनुदात्ता उदात्तेतो विच्छिस्तूदात्तः ॥

अथ षडुभयतोभाषाः ॥

मिल, संगमे । मुचॢ, मोचने † । लुपॢ, छेदने । विद्लृ, लाभे । लिप, उपदेहे । षिच, क्षरणे । इत्यनुदात्ताः स्वरितेतो मिलिस्तूदात्तः ‡ ॥

अथ त्रयः परस्मैभाषाः ॥

कृती, छेदने । खिद, परिघातने । पिश, अवयवे । इत्युदात्ता उदात्तेतः खिदिस्त्वनुदात्तः ॥ वृत् ॥

इति शविकरणास्तुदादयः ॥

---

अथ रुधादिर्गणः ॥

अथ नवोभयतोभाषाः ॥

रुधिर्, आवरणे । भिदिर्, विदारणे । छिदिर्, द्वैधीकरणे । रिचिर्, विरेचने । विचिर्, पृथग्भावे । क्षुदिर्, संपेषणे । युजिर्, योगे । उच्छृदिर्, दीप्तिदेवनयोः । उतृदिर्, हिंसानादरयोः । इत्यनुदात्ताः स्वरितेतः छृदितृदी तूदात्तौ ॥

---

† मोचणे । आख्या० पृ० १७४ ॥ ‡ विन्दतिस्तूदात्तः ॥ इति पाठा० ॥ सं० ॥

अथैकः परस्मैभाषः ॥

कृती, छेदने *। इत्युदात्त उदात्तेत् ॥

अथैक आत्मनेभाषः ॥

ञिइन्धी, दीप्तौ । उदात्तोऽनुदात्तेत् ॥

अथ द्वावात्मनेभाषौ ॥

खिद, दैन्ये । विद, विचारणे । इत्यनुदात्तावनुदात्तेतौ ॥

अथ द्वादश परस्मैभाषाः ॥

शिष्लृ, विशेषणे । पिष्लृ, संचूर्णने । भञ्जो, आमर्दने । भुज, पालनाऽभ्यवहारयोः । तृह, हिसि, हिंसायाम् । उन्दी, क्लेदने । अञ्जू, व्यक्तिम्रक्षणकान्तिगतिषु । तञ्चू, संकोचने । ओविजी, भयचलनयोः । वृजी, वर्जने । पृची, संपर्के । इत्युदात्ता उदात्तेतः । आद्याश्चत्वारस्त्वनुदात्ताः ॥ वृत् ॥

इति श्नम्विकरणा रुधादयः ॥

---

अथ तनादिर्गणः ॥

---

अथ सप्तोभयतोभाषाः ॥

तनु विस्तारे । षणु, दाने । क्षणु, हिंसायाम् । क्षिणु, च । ऋणु, गतौ । तृणु, अदने । घृणु, दीप्तौ । इत्युदात्ताः स्वरितेतः ॥

---

* कृती, वेष्टने ॥ व्याख्या० पृ० १७६ ॥ सं० ॥

अथ द्वावात्मनेभाषौ ॥

वनु, याचने । मनु, अवबोधने । इत्युदात्तावनुदात्तेतौ ॥

अथैक उभयतोभाषः ॥

डुकृञ्, करणे । अनुदात्तः ॥ वृत् ॥

इत्युविकरणास्तनादयः ॥



अथ क्र्यादिर्गणः ॥

---

अथ सप्तोभयतोभाषाः ॥

डुक्रीञ्, द्रव्यविनिमये । प्रीञ्, तर्पणे कान्तौ च । श्रीञ्, पाके । मीञ्, हिंसायाम् । षिञ्, वन्धने । स्कुञ्, आप्रवणे । युञ्, बन्धने । इत्यनुदात्ताः [ क्र्यादयः ] ॥

अथ नवोभयतोभाषाः ॥

क्नूञ्, शब्दे । द्रूञ्, हिंसायाम् । पूञ्, पवने । मूञ्, बन्धने । लूञ्, छेदने । स्तॄञ्, आच्छादने । कॄञ्, हिंसायाम् । वॄञ्, वरणे । धूञ्, कम्पने । इत्युदात्ताः [क्नू प्रभृतयः] ॥

अथ शॄादयो गॄणात्यन्तास्त्रयोदश परस्मैभाषाः ॥

शॄ, हिंसायाम् । पॄ, पालनपूरणयोः । वॄ, वरणे । स्तॄ, हिंसायाम् । भॄ, भरणे । भॄ, भर्त्सने । जॄ, वयोहानौ । झॄ इत्येके । दॄ, विदारणे । धॄ इत्यन्ये । नॄ, नये । मॄ, हिंसायाम् ।

ॠ, गतौ । गॄ, शब्दे * । इति आद्य उदात्ताः ॥

## अथ दश परस्मैभाषाः ॥

ज्या, वयोहानौ । व्री, वरणे । री, गतिरेषणयोः । ली, श्लेषणे । व्ली, वरणे । प्ली, गतौ ॥ वृत् ॥ इति प्वादयः ॥

व्रीष्, हिंसायाम् । भ्री, भये । [ भरण इत्येके ] । ज्ञा, अवबोधने । वन्ध, वन्धने । इति ज्यादयोऽनुदात्ताः ॥

## अथैक आत्मनेभाषः ॥

वृङ्, संभक्तौ । इत्युदात्तः । इति ल्वादयः [ ? ] ॥

## अथ पञ्चविंशतिः परस्मैभाषाः ॥

श्रन्थ, विमोचनप्रतिहर्षयोः । मन्थ, विलोडने । श्रन्थ, ग्रन्थ, संदर्भे । कुन्थ, संश्लेषणे । [ संक्लेशे इत्येके । कुथ इति दुर्गः ] । मृद, क्षोदे । मृड, च । मृड सुखे च । गुध, रोषे । कुष, निष्कर्षे । क्षुभ, सञ्चलने । णभ, तुभ, हिंसायाम् । क्लिशू, विबाधने । अश, भोजने । उध्रस, उञ्छे । इष, आभीक्ष्ण्ये । विष, विप्रयोगे । प्रुष, प्लुष, स्नेहनसेवनपूरणेषु । पुष, पुष्टौ । मुष, स्तेये । खच, भूतप्रादुर्भावे । खव इत्येके † । हिठ, च ‡ । इति श्रन्थादयः [ विषिवर्जं ] उदात्ता उदात्तेतः ॥

---

* आख्यातिक और अन्य धातुपाठों में इस प्रकार पाठ है:—शॄ, हिंसायाम् । पॄ, पालनपूरणयोः । वॄ, वरणे । भरण इत्येके । भॄ, भर्त्सने । मॄ, हिंसायाम् । दॄ, विदारणे । जॄ, वयोहानौ । झॄ इत्येके । धॄ इत्यन्ये । नॄ, नये । कॄ, हिंसायाम् । ॠ, गतौ । गॄ, शब्दे ॥ शॄ आदि ११ धातु सेट् हैं ॥ आख्या० पृ० १८२—८३ ॥

† पाठोऽयमित्येके । इति पाठा० ॥ ‡ हेठ च । इत्याख्यातिके ॥ सं० ॥

## अथैक उभयतोभाषः ॥

ग्रह, उपादाने । इत्युदात्तः स्वरितेत् ॥ वृत् ॥

इति श्नाविकरणाः क्र्यादयः ॥



## अथ चुरादिगणः ॥

---

अथ चुरादयस्तुप्यन्तास्त्रिषष्ट्युत्तरमेकशतमुदात्तेतः परस्मैभाषाः * ॥

चुर, स्तेये । चिति, स्मृत्याम् । यत्रि, सङ्कोचने । स्फुडि, परिहासे । [ स्फुटि इत्येके ] । लक्ष, दर्शनाङ्कनयोः । कुद्रि, अनृतभाषणे । लड, उपसेवायाम् । मिदि, स्नेहने । ओलडि, उत्क्षेपणे । [ ओकारो धात्वयव इत्येके । न इत्यपरे । उलडि इत्यन्ये ] । जल, अपवारणे । लज इत्येके । पीड, अवगाहने । नट, अवस्पन्दने† । श्रथ, प्रयत्ने । प्रस्थान इत्येके । बध संयमने । [ बन्ध इति चान्द्राः ] । [ पॄ, पूरणे ] । ऊर्ज्ज, बलप्राणनयोः । पक्ष, परिग्रहे । वर्ण, चूर्ण, प्रेरणे । वर्ण वर्णने [ इत्येके ] । प्रथ, प्रख्याने । पृथ, प्रक्षेपे । पथ इत्येके । षम्ब, संबन्धने । शम्ब, च । साम्ब इत्येके । भक्ष, अदने । कुट्ट, छेदनभर्त्सनयोः । पूरण इत्येके । पुट्ट, चुट्ट, अल्पीभावे । अट्ट, षुट्ट, अनादरे । लुण्ठ, स्तेये । शठ, श्वठ, असंस्कारगत्योः । श्वठि इत्येके । तुञ्ज, तुजि, पिज, पिजि, लजि, लुजि, हिंसाबलादाननिकेतनेषु ।

---

* सेट्र परस्मैपदिन एकशतमष्टचत्वारिंशच्च । इत्याख्यातिके ॥

† अवस्कन्दने । इति पाठान्तरम् । सं० ॥

 

पिस, गतौ। षान्त्व, सामप्रयोगे। श्वल्क, वल्क, परिभाषणे। ष्णिह, स्नेहने। स्फिट, इत्येके। स्मिट, अनादरे। ष्मिङ् अनादरे इत्येके। श्लिष, श्लेषणे। पथि, गतौ। पिच्छ, कुट्टने। छदि, संवरणे। श्रण, दाने। तड, आघाते। खड, खडि, कडि, भेदने। कुडि, रक्षणे। गुडि, वेष्टने च। [रक्षण इत्येके]। कुठि गुठि चेत्यन्ये। खुडि, खण्डने। वटि, विभाजने। वडि इत्येके। चडि, कोपे *। मडि, भूषायाम् हर्षे च। भडि, कल्याणे। छर्द, वमने। पुस्त, बुस्त, आदरानादरयोः। चुद, संचोदने। नक्क, धक्क, नाशने। चक्क, चुक्क, व्यथने। क्षल, शौचकर्मणि। तल, प्रतिष्ठायाम्। तुल, उन्माने। दुल, उत्क्षेपे। पुल, महत्वे। चुल, समुच्छ्राये। मूल, रोहणे। वुल, निमज्जने†। कल, विल, क्षेपे। बिल, भेदने। तिल, स्नेहने। चल, भृतौ। पाल, रक्षणे। लूष, हिंसायाम्। शुल्ब, माने। शूर्प, च। चुट, छेदने। मुट, संचूर्णने। पिश, नाशने* । पडि, पसि, नाशने। व्रज, मार्गसंस्कारगत्योः। शुल्क, अतिस्पर्शने। चपि, गत्याम्। क्षपि, क्षान्त्याम्। क्षजि, कृच्छ्रजीवने। श्वर्त्त, गत्याम्। श्वभ्र, च। ज्ञप‡, मिच्च। ज्ञप मारणतोषणनिशामनेषु। यम, च परिवेषणे। चह, परिकल्कने। [चप इत्येके]। रह, त्यागे [च]। वक्क, प्राणने। चिञ्, चयने। [नान्ये मितोऽहेतौ]। घट्ट, चलने। मुस्त, संघाते। खट्ट, संवरणे। षट्ट, स्फिट्ट, चुबि, हिंसायाम्। पूल, सङ्घाते। पूर्ण इत्येके। [पुण इत्यन्ये]। पुंस, अभिवर्द्धने। टकि, बन्धने। धूस, कान्तिकरणे। [धूष इत्येके]। [धूश

---

* अन्यत्र न दृश्यते ॥ † आख्यातिके दृश्यते ।

‡ ज्ञप, ज्ञानज्ञापनमारणतोषणनिशाननिशामनेषु । मिच्चेत्येके । इति पाठान्तरम् ॥ सं० ॥

इत्यपरे ]। कीट, वरणे। चूर्ण, संकोचने । पूज, पूजायाम् । अर्क, स्तवने । [ तपन इत्येके ] । शुठ, आलस्ये । शुठि. शोषणे । जुड, प्रेरणे । गज, मार्ज, शब्दार्थौ । मर्च्च, च । घृ, प्रस्रवणे । पचि, विस्तारवचने । तिज, निशाने । कृत, संशब्दने । ऊर्द्ध *, वर्द्ध, छेदनपूरणयोः । कुवि, आच्छादने । कुभि इत्येके । लुबि, तुबि, अदर्शने । अर्द्दन इत्येके । ह्लप, व्यक्तायां वाचि । क्लृप†, इत्येके । चुटि, छेदने । इल, प्रेरणे । म्रच्छ, म्लेच्छने । म्लेच्छ, म्रक्ष, छेदने ‡ । म्लेच्छ, अव्यक्तायां वाचि । व्रूस, वर्ह, हिंसायाम् । गर्द, गर्ज, शब्दे । गर्ध, अभिकाङ्क्षायाम् । गुर्द, पूर्वनिकेतने × । जसि, रक्षणे । [ मोक्षण इत्येके ] । ईड, स्तुतौ । जसु, हिंसायाम् । पिडि, संघाते । रुष, रोषे । रुट इत्येके । डिप, क्षेपे । ष्टुप, समुच्छ्राये । इत्युदात्ता उदात्तेतः ॥

अथ आकुस्माद् द्विचत्वारिंशदात्मनेभाषाः+ ॥

चित, संचेतने । दशि, दंशनदर्शनयोः । दस दसि इत्येके । डप, डिप, संघाते । तत्रि, कुटुम्बधारणे । मत्रि, गुप्तपरिभाषणे । स्पश, ग्रहणसंश्लेषणयोः । तर्ज, भर्त्स, तर्ज्जने । बस्त, गन्ध, अर्दने । विष्क, हिंसायाम् । हिष्क इत्येके । निष्क, परिमाणे । लल, ईप्सायाम् । कूण, संकोचने । तूण, पूरणे । भ्रूण, आशाविशङ्कयोः । शठ, श्लाघायाम् । यक्ष, पूजायाम् । स्यम, वितर्के । गूर○, उद्यमने । शम, लक्ष, आलोचने । त्रुट, छेदने । कुट इत्येके । कुत्स, अवक्षेपणे । गल, स्रवणे । भल, आभण्डने ÷ ।

* आख्यातिके 'ऊर्द्ध' इति नास्ति ॥ † क्लृप । इति पाठः । ‡ अ... न दृश्येते ॥ × गुर्द, पुर्व, निकेतने । ऐसा पाठ होना चाहिये । ○देखो आख्या० पृ० १६१ ॥ + चेतादयोऽष्टत्रिंशदुदात्ताः । इति आख्यातिके ॥ पृ० १६३ ॥ ○ गुर । इति आख्यातिके पृ० १६२ ॥ ÷ भल, भण्डने । आख्या० पृ० १६३ ॥ सं० ॥

कूट, आप्रदाने। अवसादन इत्येके *। कुट्ट, प्रतापने। वञ्चु, प्रलम्भने। वृष, शक्तिबन्धने। मद, तृप्तियोगे। दिवु, परिकूजने। गॄ, विज्ञाने। विद, चेतनाख्याननिवासेषु। मान, स्तम्भे। गुपु, जुगुप्सायाम्। कुस्म, नाम्नो वा [ कुत्सितस्मयने ]। इत्युदात्ता अनुदात्तेतः ॥

## अथोभयतोभाषाः ॥

चर्च, अध्ययने। बुक्क, भाषणे। शब्द, उपसर्गादाविष्कारे च †। कण, निमीलने। जभि, नाशने। षूद, क्षरणे। जसु, ताडने। पश, बन्धने। अम, रोगे। चट, स्फुट, भेदने। घट, संघाते। हन्त्यर्थाश्च। दिवु, मर्दने। अर्ज, प्रतियत्ने। घुषिर्, विशब्दने। आङः क्रन्द, सातत्ये। लस, शिल्पयोगे। तसि, भूष, अलङ्कारे। अर्ह, पूजायाम्। ज्ञा, नियोगे। भज, विश्राणने। शृधु, प्रसहने। यत, निकारोपस्कारयोः। कल, गल, आस्वादने। रघ इत्येके। रग इत्यन्ये। अञ्चु, विशेषणे। लिगि, चित्रीकरणे। मुद, संसर्गे। त्रस, धारणग्रहणवारणेषु। उध्रस, उञ्छे। [ उकारो धात्वयव इत्येके। न इत्यन्ये ]। मुच, प्रमोचनमोदनयोः। वस, स्नेहच्छेदापहरणेषु। चर, संशये। च्यु, हसनसहनयोः। [ च्युस इत्येके ]। भुवो, अवकल्कने ‡। मिश्रीकरण इत्येके। चिन्तन इत्यन्ये। कृपेश्च ॥

---

## आस्वदः सकर्मकात् ॥

ग्रस, ग्रहणे। पुष, धारणे। दल, विदारणे। पट, पुट, लुट, तुजि, मिजि, पिजि×, भजि, लघि, त्रसि, पिसि, कुसि, दसि,

---

* आसादन इत्येके। आख्या० पृ० १६३ ॥ † चाकाङ्क्षणे। आख्या० पृ० १६३ पं० २३ ॥ ‡ भुवो, अवकल्कने= मिलाना वा विचारना—भावयति। आख्या० पृ० १६५ ॥ × लिजि, लुजि। इत्यधिकौ पुस्तकान्तरे ॥ सं० ॥

कुशि, घट, घटि, बृहि, वर्ह, वल्ह, गुप, धूप, विच्छ, चीव, पुथ, लोकृ, लोचृ, णद, कुप, तर्क, वृतु, वृधु, भाषार्थाः। रुट, लजि, अजि, दसि, भृशि, रुशि, शीक *, नट, पुटि, जिवि, रघि, लघि, अहि, रहि, महि, च। लडि, तड, नल, च। पूरी आप्यायने। रुज, हिंसायाम्। ष्वद, आस्वादने। [ स्वाद इत्येके ] ॥

## आधृषाद्वा ॥

युज, पृच, संयमने। अर्च, पूजायाम्। षह, मर्षणे। ईर, क्षये †। ली, द्रवीकरणे,। वृजी, वर्जने। वृञ्, आवरणे। जॄ, वयोहानौ। ज्रि च, रिच, वियोजनसंपर्चनयोः। शिष, असर्वोपयोगे। तप, दाहे। तृप, तृप्तौ। छृदी, सन्दीपने। चृप, छृप, दृप, सन्दीपने [ इत्येके ]। दृभी, भये। दृभ, सन्दर्भे। छद, संवरणे। श्रथ, मोक्षणे। [ हिंसायामित्येके ]। मी, गतौ। ग्रन्थ, बन्धने। क्रथ हिंसायाम्। स्वरितेदित्येके। शीक, आमर्षणे। चीक, च। अर्द, हिंसायाम्। [ स्वरितेत् ]। [ हिसि, हिंसायाम् ]। अर्ह, पूजायाम्। आङः षद, पद्यर्थे। शुन्ध, शौचकर्मणि। छद, अपवारणे। स्वरितेत्। जुष, परितर्कणे। [ परितर्पण इत्यन्ये ]। धूञ्, कम्पने। प्रीञ्, तर्पणे। श्रन्थ, ग्रन्थ, सन्दर्भे। आप्लृ, लम्भने। [ स्वरितेदयमित्येके ]। तनु, श्रद्धोपकरणयोः। उपसर्गाच्च दैर्घ्ये। [ चन, श्रद्धोपहननयोः इत्येके ]। वद, सन्देशवचने। स्वरितेत्। वच, परिभाषणे। मान, पूजायाम्। भू, प्राप्तावात्मनेपदी। गर्ह, विनिन्दने। मार्ग, अन्वेषणे। कठि, शोके। मृजू, शौचालङ्करणयोः। मृष, तितिक्षायाम्। [ स्वरितेत् ]। धृष, प्रसहने। इत्याधृषीयाः ॥

* रुसि, चि। इत्यधिकौ पुस्तकान्तरे ॥

† ईर, क्षेपे। आख्या० पृ० १६५। पं० ३३ ॥ सं० ॥

## अथादन्ताः ॥

कथ, वाक्यप्रबन्धे । वर, ईप्सायाम् । गण, संख्याने । शठ, श्वठ, सम्यगवभाषणे । पट, वट, ग्रन्थे । रह, त्यागे । रङ्ग गतौ * । स्तन, गदी, देवशब्दे । पत, गतौ [ वा ] । [ वाऽदन्त इत्येके ] । पष, अनुपसर्गात् । स्वर, आक्षेपे । रच, प्रतियत्ने । कल, गतौ संख्याने च । चह, परिकल्कने । मह, पूजायाम् । सार, कृप, श्रथ, दौर्बल्ये । स्पृह, ईप्सायाम् । भाम, क्रोधे । सूच, पैशुन्ये । खेट, भक्षणे । [ खेड इत्येके ] । खोट इत्यन्ये । क्षोट, क्षेपे । गोम, उपलेपने । कुमार, क्रीडायाम् । शील, उपधारणे । साम, सान्त्वप्रयोगे । वेल, कालोपदेशे । काल च † । पल्पूल, लवनपवनयोः । वात, सुखसेवनयोः । गवेष, मार्गणे । वास, उपसेवायाम् । निवास, आच्छादने । भाज, पृथक्कर्मणि । सभाज, प्रीतिदर्शनयोः । [ प्रीतिसेवनयोरित्येके ] । ऊन, परिहाणे । ध्वन, शब्दे । कूट ‡, परितापे । परिदाह इत्येके । संकेत, ग्राम, कुण, गुण, चामन्त्रणे × । कूण, संकोचने । स्तेन, चौर्य्ये ॥

## आगर्वादात्मनेभाषाः ॥

पद, गतौ । गृह, ग्रहणे । मृग, अन्वेषणे । कुह, विस्मापने । शूर, वीर, विक्रान्तौ । स्थूल, परिबृंहणे । अर्थ, उपयाच्ञायाम् । सत्र, सन्तानक्रियायाम् । गर्व, माने । इत्यागर्वीयाः । सूत्र, वेष्टने । विमोचन इत्यन्ये । मूत्र, प्रस्रवणे । रूक्ष, पारुष्ये । पार, तीर, कर्मसमाप्तौ । पुट, संसर्गे । धेक +, दर्शन इत्येके । कत्र, शैथिल्ये । कर्त इत्यप्येके ॥

---

* अन्यत्र न दृश्यते ॥ † काल इति पृथक् धातुरित्येके । आख्या० पृष्ठ १९६ ॥
‡ कुट । इति पाठा० ॥ × केत, श्रावणे निमन्त्रणे च । इत्यधिकं पुस्तकान्तरे ॥
+ धेक । इति आख्यातिके पाठः ॥ सं० ॥

प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च ॥ तत्करोति तदाचष्टे ॥ तेनातिक्रामति ॥ धातुरूपं च † ॥ कर्तृकरणाद्धात्वर्थे ॥

वल्क दर्शने। चित्र, चित्रीकरणे। कदाचिद्दर्शने। अंस, समाघाते। वट, विभाजने। लज, प्रकाशने। वटि लजि इत्येके। मिश्र, सम्पर्के। सङ्ग्राम, युद्धे। अयमनुदात्तेत्। स्तोम, श्लाघायाम्। छिद्र, कर्णभेदने। [ करणभेदन इत्यन्ये ]। [ कर्ण इति धात्वन्तरमित्यन्ये ]। अन्ध, दृष्ट्युपघाते। उपसंहार इत्यन्ये। दण्ड, दण्डनिपातने। अङ्क, पदे लक्षणे च। अङ्ग, च। सुख, दुःख, तत्क्रियायाम्। रस, आस्वादनस्नेहनयोः। व्यय, वित्तसमुत्सर्गे। रूप, रूपक्रियायाम्। छेद, द्वैधीकरणे। छद, अपवारणे। लाभ, प्रेरणे। व्रण, गात्रविचूर्णने। वर्ण, वर्णक्रियाविस्तारगुणवचनेषु। बहुलमेतन्निदर्शनम्। [ पर्ण, हरितभावे। विष्क, दर्शने। क्षप प्रेरणे। वस, निवासे। तुत्थ, आवरणे ]। णिङ्ङ्गान्निरसने। श्वेताऽश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च। पुच्छादिषु [ प्रातिपदिकाद् ] धात्वर्थ इत्येव सिद्धम् ॥

इति चुरादयः ॥

---

## अथ कण्ड्वादयः ॥

---

कण्डूञ्, गात्रविघर्षणे। मन्तु, अपराधे। वल्गु, पूजामाधुर्ययोः। असु, उपतापे। असू असूञ् इत्येके। लेट्, लोट्, धौर्त्ये पूर्वभावे स्वप्ने च। [ दीप्तावित्येके ]। लेला, दीप्तौ। इरस्, इरज्, इरञ्, ईर्ष्यायाम्। उषस्, प्रभातभावे। वेद, धौर्त्ये

† आख्यानात्कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकमित्यधिकं पुस्तकान्तरे ॥ सं० ॥

स्वप्ने च। मेधा, आशुग्रहणे। कुषुभ, क्षये*। मगध, परिवेष्टने। नीचदास्य इत्यन्ये। तन्तस्, पम्पस्, दुःखे। सुख, दुःख, तत्क्रियायाम्। सपर, पूजायाम्। अरर, आराकर्मणि। भिषज्, चिकित्सायाम्। भिष्णज्†, उपसेवायाम्। इषुध, शरधारणे। चरण, वरण, गतौ। चुरण, चौर्य्ये। तुरण, त्वरायाम्। भुरण, धारणपोषणयोः। गद्गद, वाक्स्खलने। एला, केला, खेला, विलासे। वेला शेला इलेत्यन्ये। लेखा, स्खलने च। अदन्तो [ऽप्य] यमित्येके। लिट्, अल्पकुत्सनयोः। लाट्, जीवने। हृणीङ्, रोषणे लज्जायाञ्च। महीङ्, पूजायाम्। रेखा, श्लाघासादनयोः। दुवस्, परितापपरिचरणयोः। तिरस्, अन्तर्द्धौ। अगद, नीरोगत्वे। उरस्, बलार्थे। तरण, गतौ। पयस्, प्रसृतौ। संभूयस्, प्रभूतभावे। अम्बर, संवर, सँभरणे। आकृतिगणोऽयम् ‡॥

इति धातुपाठे कण्ड्वादिगणः समाप्तः॥

इति श्रीयुतदयानन्दसरस्वतीस्वामिनाऽकारादिक्रम-
सूचीपत्रेण सह धातुपाठो यन्त्रयितः।
पौषवदि १० गुरुवारे
संवत् १९३९

—:*:—

* कुशुभ, क्षेपे। आख्या० पृ० २३१। कण्ड्वादि प्रक्रिया॥ कुषुभ, क्षेपे। महर्षि दयानन्द अष्टाध्यायी भाष्य भाग २ पृष्ठ ३०। अतः "क्षये" पाठ अशुद्ध है॥ † भिषण्ज्। आख्यातिके॥ ‡ कण्ड्वादि के धातु व प्रातिपदिक दोनों होने में आख्या० पृष्ठ २३१ के अतिरिक्त महर्षि अष्टाध्यायीभाष्य में कण्ड्वादिभ्यो यक्॥ अ० ३।१।२७॥ इस सूत्र का व्याख्यान भी द्रष्टव्य है वहां लिखा गणपाठ भी देखें॥ सं०॥

# धातुसूचीपत्रम् ॥



† इससे आगे आख्यातिक के धातुसूचीपत्र में 'अमि' भ्वा० पर० से० भी पढ़ा है। यह धातु आख्या० संस्करण ६ पृ० ८३ पं० २७ और इस पुस्तक में पृ० १२ पं० ७ पर वर्णित है ऐसे धातु अब यथास्थान दे दिये हैं ।। सं०।।

| अकारादयः | गणादयः | पृ० | पं० | इकारादयः अ+आ+इ | गणादयः | पृ० | पं० |
|---|---|---|---|---|---|---|---|
| अम्बर | कं० प० से. | ३६ | १३ | अस | भ्वा. उ. से. | १३ | १८ |
| अय | भ्वा. आ. ,, | ७ | १५ | अस | अ० प० ,, | १८ | ८ |
| अर्क | चु० प० ,, | ३४ | ३ | असु | दि० ,, ,, | २२ | २२ |
| अर्च | भ्वा. ,, ,, | ३ | २१ | असु | कं० ,, ,, | ३८ | २० |
| अर्च | चु० उ० ,, | ३६ | ८ | असु | ,, ,, ,, | ३८ | २० |
| अर्ज | भ्वा. प० ,, | ४ | ४ | असूञ्* | ,, ,, ,, | ३८ | २० |
| अर्ज | चु० उ० ,, | ३५ | ११ | अह | स्वा० ,, ,, | २४ | १२ |
| अर्थ | ,, आ० ,, | ३७ | २० | अहि | भ्वा. आ. ,, | ६ | १८ |
| अर्द | भ्वा. प० ,, | २ | २ | अहि | चु०. उ० ,, | ३६ | ५ |
| अर्द | चु० उ० ,, | ३६ | १५ | अंस | ,, ,, ,, | ३८ | ४ |
| अरर | कं० प० ,, | ३६ | ४ | | **आ** | | |
| अर्ब | भ्वा. ,, ,, | ६ | १८ | | | | |
| अर्व | ,, ,, ,, | ८ | २१ | आच्छि | भ्वा. प. से. | ३ | २२ |
| अर्ह | ,, ,, ,, | १० | २२ | आप्लृ | स्वा. ,, अ० | २४ | ४ |
| अर्ह | चु० उ० ,, | ३५ | १३ | आप्लृ | चु० उ० ,, | ३६ | १६ |
| अर्ह | ,, ,, ,, | ३६ | १६ | आस | अ० आ. से. | १६ | २० |
| अल | भ्वा. प० ,, | ८ | ५ | | **इ** | | |
| अव | ,, ,, ,, | ६ | ३ | | | | |
| अश | क्र्या. ,, ,, | ३१ | १५ | इक् | अ. प. अ. | १७ | २१ |
| अशूङ् | स्वा० आ. ,, | २४ | ७ | इख | भ्वा. ,, से | ३ | २ |
| अष | भ्वा. उ०,, | १३ | १८ | इखि | ,, ,, ,, | ३ | ३ |

* ञकारानुबन्ध से यह उभयपदी धातु है। आख्यातिक धातुसूचीपत्र में इसे उभयपदी ही लिखा है ॥ सं० ॥

मुख । प्रग्रीव । शूल वज्र । कर्पट । शिखर । कल्क । नाट । मस्तक । वलय । कुसुम । तृण । पङ्क । कुण्डल । किरीट । अर्बुद । अंकुश । तिमिर । आश्रम । भूषण । इल्कस । मुकुल । बसन्त । तडाग । पिटक । विटङ्क । माष । कोश । फलक । दिन । दैवत । पिनाक । समर । स्थाणु । अनीक । उपवास । शाक । कर्पास । चषाल । खण्ड । दर । विटप । रण । बल । मल । मृणाल । हस्त । सूत्र । ताण्डव । गाण्डीव । मण्डप । पटह । सौध । पार्श्व । शरीर । फल । छल । पुर । राष्ट्र । विश्व । अम्बर । कुट्टिम । मण्डल । ककुद । तोमर । तोरण । मञ्चक । पुङ्ख । मध्य । बाल । वल्मीक । वर्ष । वस्त्र । देह । उद्यान । उद्योग । स्नेह । स्वर । सङ्गम । निष्क । क्षेम । शूक । छत्र । पवित्र । यौवन । पानक । भूषिक× । वल्कल । कुञ्ज । विहार । लोहित । विषाण । भवन । अरण्य । पुलिन । दृढ । आसन । ऐरावत । शूर्प । तीर्थ । लोमश । तमाल । लोह । दण्डक । शपथ । प्रतिसर । दारु । धनुस् । मान । तङ्क । वितङ्क । मव । सहस्र । ओदन । प्रवाल । शकट । अपराह्ण । नीड । शकल । कुणप । मुण्ड । पूत । मरु* । लोमन । लिङ्ग । सीर । क्षत । ऋण । कडार । =पूर्ण । पणव । विशाल । बुस्त । पुस्तक । पल्लव । निगड । खल । स्थूल । शार । नाल । प्रवर । कटक । कण्टक । छाल । कुमुद । पुराण । जाल । स्कन्ध । ललाट । कुङ्कुम । कुशल । विडङ्ग । पिण्याक । आर्द्र । हल । योध । बिम्ब । कुक्कुट । कुडप । खण्डल । पञ्चक । वसु ।

× 'मूषिक' इति पुस्तकान्तरे । सं० ॥

* 'कंस' इत्याधिकं पुस्तकान्तरे । सं० ॥

= 'वर्ण' ,, ,, ,,

उद्यम। स्तन। स्तेन। छात्र। कलह। पालक। ||||वर्चस्क। कूर्च। तण्डक। तण्डुल। इत्यर्द्धर्चादयः॥

२३—पैलादिभ्यश्च॥ अ० २।४।५९॥

पैलादिप्रातिपदिकेभ्यो युवप्रत्ययस्य लुग्भवति। पीलाया अपत्यं पैलः। तस्य युवापत्यमिति फिञ् तस्य लुक्। पैलः पिता। पैलः पुत्रः। एवं शालङ्किः। इत्यादि।

पैल। शालङ्कि। सात्यकि। सात्यकामि। दैवि। औदमज्जि। औदव्रजि। औदमेघि। औदबुद्धि। दैवस्थानि। पैङ्गलायनि। राणायनि। रौहक्षिति। भौलिङ्गि। औदगाहमानि। औज्जिहानि। राणक्षति। राणि। सौमनि। ऊहमानि। तद्राजाच्चाणः (१)। आकृतिगणोऽयम्। इति पैलादयः।

२४—न तौल्वलिभ्यः॥ अ० २।४।६१॥

तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य लुङ् न भवति। तुल्वलस्य गोत्रापत्यं तौल्वलिः। तस्य युवापत्यं तौल्वलायनः।

तौल्वलि। धारणि। रावणि। पारणि। दैलीपि। दैवलि। दैवमति। दैवयज्ञि। प्रावाहणि। मान्धातकि। आनुहारति। श्वाफल्कि। आनुमति। आहिंसि। आसुरि। आयुधि। नैमिषि। आसिबन्धकि। वैकि। पौष्करसादि। वैरकि। वैलकि। वैहति। वैकर्णि। कारेणुपालि। कामलि। रान्धकि। आसुराहति।

(१) वङ्गानां राजा वाङ्गः+। तस्य युवापत्यम् वाङ्गः। अङ्गस्यापत्यमाङ्गः पिता पुत्रो वा॥

|||| 'हल' इत्याधिकं पुस्तकान्तरे। सं०॥

+ द्वयञ्मगधक०। अ० ४, १, १७० इत्यनेन तद्राजसंज्ञकोऽण् प्रत्ययः। सं०॥

प्राणाहति । पौष्कि । कान्दकि । दौषकगति । आन्तराहति । इति तौल्वल्यादयः ॥

२५—यस्कादिभ्यो गोत्रे ॥ अ० २ । ४ । ६३ ॥

यस्कादिभ्यः प्रातिपदिकेभ्यः परस्यास्त्रीलिङ्गस्य बहुवचने वर्त्तमानस्य गोत्रप्रत्ययस्य लुग्भवति यदि तेनैव गोत्रप्रत्ययेन कृतं बहुत्वं भवेत्तदा । यस्कस्य गोत्रापत्यं यास्कः । यास्कौ । यस्काः । लभ्याः । तेनैवेति किम् । प्रियो यास्को येषां ते प्रिययास्काः । अस्त्रियामिति किम् । यास्क्यः स्त्रियः । गोत्र इति किम् । यास्काश्छात्राः ।

(१) यस्क । लभ्य । दुह्य । अयःस्थूण । तृणकर्ण (२) । सदामत्त । कम्बलभार । अहिर्योग † । कर्णाटक । पर्णाडक । पिण्डीजङ्घ । बकसक्थ (३) । वस्ति । कद्रु । विश्रि । कद्र* । अजबस्ति । मित्रयु (४) । रक्षामुख । जङ्घारथ । मन्थक । उत्कास । कटुक । मन्थक । पुष्करसद् । विषपुट । उपरिमेखल । क्रोष्टुमान ।

(१) यस्कादिपञ्चभ्यः शिवादित्वादण् ‖‖ ॥
(२) सदामत्तादिसप्तभ्य ‡ इञ् ॥
(३) वस्त्यादिषड्भ्यो गृष्ट्यादित्वाड्ढञ् ||| ॥
(४) रक्षामुखाद्येकादशस्य इञ् + ॥

† "बस्ति" इति पुस्तकान्तरे । सं० ॥
* 'कुद्रि' इत्यधिकं पुस्तकान्तरे । सं० ॥
‖‖ शिवादिभ्योऽण् अ० ४, १, ११२, इत्यनेनाऽण् प्रत्ययः ॥
‡ "अत इञ्" अ० ४, १, ९५ इत्यनेनञ् प्रत्ययः ॥
||| 'गृष्ट्यादिभ्यश्च' अ० ४, १, १३६ इत्यनेनढञ् प्रत्ययः ॥
+ "अत इञ्" अ० ४, १, ११२, इत्यनेनाऽण् प्रत्ययः ॥

क्रोष्टुपाद । शीर्षमाय (१)। खरप (२)। पदक। वर्मक (३)। भन्दन (४)। भडिल। भण्डिल। भडित। भण्डित (५)। इति यस्कादयः ॥

२६—न गोपवनादिभ्यः ॥ अ० २।४।६७ ॥

गोपवनादिप्रातिपदिकेभ्यः परस्य गोत्रप्रत्ययस्य बहुवचनविभक्तौ लुङ् न भवति यञञोश्चेति+ प्राप्तो लुक् प्रतिषिध्यते। गोपवनस्य गोत्रापत्य गौपवनः। गौपवनौ। गौपवनाः।

गोपवन। शिग्रु। बिन्दु। भाजन। अश्व। अवतान। श्यामाक। श्वापर्ण। इत्यष्टौ विदाद्यन्तर्गता गोपवनादयः ॥

२७—तिककितवादिभ्यो द्वन्द्वे ॥ अ० २।४।६८ ॥

तिकादिभ्यः कितवादिभ्यश्च परस्य गोत्रप्रत्ययस्य द्वन्द्वसमासे बहुवचनविभक्तौ लुग्भवति। तैकायनयश्च कैतवायनयश्चेत्यत्र तिकादिभ्यः* फिञ् तस्य लुक्।

---

(१) खरपशब्दान्नडादित्वात्फक् × ॥

(२) पदकवर्मकाभ्यामिञ् ‡ ॥

(३) भन्दनशब्दाच्छिवादित्वादण् ॥

(४) भडिलादिचतुर्भ्योऽश्वादित्वात् फञ् ≣ ॥

---

× 'नडादिभ्यः फक्' अ० ४, १, ९९ इत्यनेन फक्। प्रत्ययः सं० ॥

‡ "अत इञ्' अ० ४, १, ९५ इत्यनेनेञ् प्रत्ययः ॥

≣ 'अश्वादिभ्यः फञ्' अ० ४, १, ११०। सं० ॥

+ अ० २, ४, ६४ ॥ * अ० ४, १, १५४ ॥

तिककितवाः । वङ्खरभण्डीरथाः (१)। उपकलमकाः (२)। पफकनरकाः। बकनखश्वगुदपरिणद्धाः (३)। उब्जककुभाः (४)। लङ्कशान्तमुखाः (५)। उरसलङ्कटाः (६)। भ्रष्टककपिष्ठलाः। कृष्णाजिनकृष्णसुन्दराः (७)। अग्निवेशदासेरकाः (८)। इति तिककितवादयः ॥

२८—उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ॥अ० २।४।६९॥

उपकादिप्रातिपदिकेभ्यः परस्य गोत्रप्रत्ययस्य बहुवचनविभक्तौ द्वन्द्वे चाद्वन्द्वे च विभाषा लुग्भवति। अद्वन्द्वग्रहणं द्वन्द्वाधिकारनिवृत्त्यर्थम्। एतेषां मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठिताः। उपकलमकाः। भ्रष्टककपिष्ठलाः। कृष्णाजिनकृष्णसुन्दराः। तेभ्यः पूर्वसूत्रेणैव नित्यलुग्भवति। अद्वन्द्वे त्वनेन विकल्पः।

(१) वाङ्खरयश्च भांडीरथयश्चेतीञ् ॥

(२) औपकायनश्च लामकायनश्चेति नडादित्वात् फक् ॥

(३) पाफकयश्च, नारकयश्च, बकनखयश्च, श्वागुदपरिणद्धयश्च सर्वेभ्योऽत इञ् तस्य लुक् ॥

(४) औब्जयश्च, इञ् काकुभाश्च, शिवादित्वादण्। तयोर्लुक् ॥

(५) लाङ्कयश्च शान्तमुखयश्च, इञ् तस्य लुक् ॥

(६) औरसायनश्च, तिकादित्वात् फिञ् लाङ्कटयश्च, इञ् तयोर्लुक् ॥

(७) भ्राष्टकयश्च, कापिष्ठलयश्च। कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च। अतइञ् तस्य लुक् ॥

(८) आग्निवेश्यश्च, गर्गादित्वाद्+ यञ्। दासेरकयश्च,- अत इञ् तयोर्लुक् ॥

+ गर्गादिभ्योयञ्। अ० ४, १, १०५ इत्यनेन ॥

उपकाः। औपकायनाः। लमकाः। लामकायनाः। शेषाणां द्वन्द्वेऽद्वन्द्वे च विकल्पः। उपक। लमक। अष्टक। कपिष्ठल। कृष्णाजिन। कृष्णसुन्दर। पराडारक। अराडारक। गडुक। सुपर्यक। सुपिष्ट। मयूरकर्ण। खारीजङ्घ। शलाबल। पतञ्जल। कठेरणि। कुषीतक। काशकृत्स्न। निदाघ। कलशीकरठ। दामकरठ। कृष्णपिङ्गल। कर्णक। पर्णक। जटिलक। बधिरक। जन्तुक। अनुलोम। अर्द्धपिङ्गलक। प्रतिलोम। प्रतान। अनभित्त ‡। चूडारक। उदङ्क। सुधायुक। अबन्धक। पदृश्वल। अनुपद। अपजग्ध। कमक। लेखाभ्र। कमन्दक। पिञ्जल। मसूरकर्ण। मदाघ। कदामत्त *। इत्युपकादयः॥

२९—भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः

॥ अ० ३। १। १२॥

अच्व्यन्तेभ्यो भृशादिप्रातिपदिकेभ्यो भवत्यर्थे क्यङ् प्रत्ययो भवति हलन्तानां चान्त्यलोपः। अभृशो भृशो भवतीति भृशायते। सुमनायते। अच्वेरिति किम्। भृशीभवति। अत्र मा भूत्।

भृश। शीघ्र। मन्द। चपल। पण्डित। उत्सुक। उन्मनस्। अभिमनस्×। सुमनस्। दुर्मनस्। रहस्। रेहस्। शश्वत्। बृहत्। वेहत्। नृषत्। शुधि। अधर। ओजस्। वर्चस्। विमनस्। रभन्। हन्। रोहत्। शुचिस्। अजरस्। इति भृशादिः॥

३०—लोहितादिडाज्भ्यः क्यष् ॥अ० ३। १। १३॥

‡ 'अनभिहित' इति पुस्तकान्तरे। सं०॥

* "दामकरठ" इत्याधिकं पुस्तकान्तरे॥

× "अविमनस्" इति पुस्तकान्तरे। सं०॥

अच्व्यन्तेभ्यो लोहितादिभ्यो डाजन्तेभ्यश्च भवत्यर्थे क्यष् प्रत्ययो भवति। अलोहितो लोहितो भवति। लोहितायते। लोहितायति। अपटपटा पटपटा भवति पटपटायति। पटपटायते।

लोहित। नील। हरित। पीत। मद्र। फेन। मन्द। आकृतिगणत्वात्। वर्म्मन्। निद्रा। करुणा। कृपा। इति लोहितादयः॥

## ३१—भविष्यति गम्यादयः॥ ३। ३। ३॥

गम्यादयः शब्दा भविष्यति काले साधवो भवन्ति। ग्रामंगमी। गमी। आगामी। प्रस्थायी। प्रतिरोधी। प्रतिबोधी। प्रतियोधी। प्रतियोगी। प्रतियायी। आयायी। भावी। इति गम्यादयः॥

## ३२—षिद्भिदादिभ्योऽङ्॥ अ० ३। ३। १०४॥

षिद्भ्यो भिदादिभ्यश्च धातुभ्यः स्त्रियामङ् प्रत्ययो भवति। जॄष्-जरा। +त्रपा। भिदादयः पठ्यन्ते।

भिदा (१)। छिदा। विदा। क्षिपा। गुहा गिर्य्योषध्योः॥ श्रद्धा। मेधा। गोधा। आरा। हारा। कारा। क्षिया। भारा। धारा। रेखा। लेखा। चूडा। पीडा। वपा। वसा। सृजा॥ क्रपेः संप्रसारणं च॥ कृपा, भिदा, विदारणे॥ छिदा द्वैधीकरणे॥ आरा शस्त्र्याम्॥ धारा प्रपाते। इति भिदादयः॥

## ३३—वा०—संपदादिभ्यः क्विप् (२)॥ अ० ३। ३। १०८॥

(१) भिदादिगणे येष्वर्थनियमः स महाभाष्यकारेणैव कृतोऽस्ति। विदारणादन्यार्थे भित्तिरिति सर्वत्रार्थान्तरे क्तिन्*॥

(२) संपदादिगणपठितेभ्य एव स्त्रियां क्विप् प्रत्ययो भवति। संपदादिश्चाकृतिगणो विज्ञेयः। कृत्यल्युटो ‡ बहुलमिति बहुलवचनात् क्तिन्नपि भवति। संपत्तिः। विपत्तिः। इत्यादि॥

+ त्रपूष्॥ * 'स्त्रियां क्तिन्' ३।३।९४॥ ‡ अ० ३।३।११३॥

संपत् । विपत् । प्रतिपत् । आपत् । परिषत् । इति संपदादयः ॥

३४—भीमादयोऽपादाने ॥ अ० ३ । ४ । ७४ ॥

भीमादयः शब्दा उणादिस्था अपादानकारके निपात्यन्ते ।

भीमः । भीष्मः । भयानकः । वरुः । चरुः । भूमिः । रजः । संस्कारः । संक्रन्दनः । प्रपतनः । समुद्रः । स्रुचः । स्रुक् । खलतिः ॥ इति भीमादयः ॥

३५—अजाद्यतष्टाप् ॥ अ० ४ । १ । ४ ॥

अजादिभ्यः प्रातिपदिकेभ्योऽकारान्ताच्च स्त्रियां टाप् प्रत्ययो भवति । अजा । देवदत्ता । अदितितपरकरणं तत्कालार्थम् । कीलालपाः, ब्राह्मणी । अत्र टाप् न भवति । अजादिग्रहणं तु जात्यादिलक्षणस्य ङीषादेर्बाधनार्थम् ।

अजा । एडका । चटका । अश्वा । मूषिका (१) । बाला । होढा । पाका । वत्सा । मन्दा । विलाता (२) । पूर्वापहरणा । अपरापहरणा (३) ॥ संभस्त्राजिनशणपिण्डेभ्यः फलात् ॥ संफला । भस्त्रफला । अजिनफला । शणफला । पिण्डफला × ।

(१) अजादिभ्यः पञ्चभ्यो जातिलक्षणो+ ङीष् प्राप्तः स बाध्यते ॥

(२) बालादिभ्यः षड्भ्यो वयसि‖ ङीष् प्राप्तः ॥

(३) आभ्यां टिल्लक्षणो≡ ङीष् प्राप्तः ॥

× ".त्रिफला" इत्यधिकं पुस्तकान्तरे । सं० ॥

+ "जातेरस्त्री विषयादयोपधात्" अ० ४ । १ । ६३, इत्यनेन ॥

‖ 'वयसि प्रथमे' अ० ४ । १ । २० इत्यनेन ॥

≡ टिड्ढाणञ० ४ । १ । १५ इत्यनेन ॥

सत्प्राक् प्रत्यक्काण्डप्रान्तशतैकेभ्यः पुष्पात् ॥ (१) सत्पुष्पा। प्राक्पुष्पा। प्रत्यक्पुष्पा। काण्डपुष्पा। प्रान्तपुष्पा। शतपुष्पा। एकपुष्पा॥ शूद्राचामहत्पूर्वा जातिः॥ (२) क्रुञ्चा। उष्णिहा। देवविशा। (३) ज्येष्ठा। कनिष्ठा। मध्यमा। (४) कोकिला। (५) मूलान्नञः। (६) अमूला। इत्यजादयः॥

३६—न षट्स्वस्रादिभ्यः॥ अ० ४। १। १०॥

षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च प्रातिपदिकेभ्यः स्त्रीप्रत्ययो न भवति, पंच। सप्त। अष्ट। स्वसा। दुहिता। ननान्दा। याता। माता। तिस्रः। चतस्रः। इति स्वस्रादयः॥

(१) समादिभ्यः फलात् सदादिभ्यश्च पुष्पाद् बहुव्रीहौ यः पाककर्णेति† सूत्रेण ङीष् प्राप्तः स बाध्यते॥

(२) अमहत्पूर्वाच्छूद्रशब्दाज्जातौ टाप्। शूद्रा। पुंयोगे तु ङीषेव* शूद्रस्य स्त्री शूद्री अमहदिति किम्। महाशूद्री॥

(३) क्रुञ्चादिभ्यः स्त्रिभ्यो प्राप्तष्टाब् विधिः॥

(४) ज्येष्ठादिभ्यस्त्रिभ्यः पुंयोगे ङीप् ‡ प्राप्तोऽनेन बाध्यते। ज्येष्ठस्य भार्या ज्येष्ठा॥

(५) कोकिलशब्दाज्जातिलक्षणो ङीष् प्राप्तः॥

(६) मूलशब्दाद् बहुव्रीहौ पाककर्णेति× ङीष् प्राप्तः। नास्ति-मूलमस्या सा अमूला॥

† अ० ४। १। ६४॥

* "पुंयोगादाख्यायाम्" अ० ४॥ १। ४८ इत्यनेन। सं०॥

‡ पुंयोगादाख्यायाम् अ० ४। १। ४८॥

× अ० ४। १। ६४॥

३७—षिद्गौरादिभ्यश्च ॥ अ० ४ । १ । ४१ ॥

षिद्भ्यो+ गौरादिभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीष् प्रत्ययो भवति । नर्त्तकी‖ । खनकी । रजकी । गौरादिभ्यः । गौरी । मत्सी ।

गौर । मत्स्य । मनुष्य । शृङ्ग । हय । गवय । मुकय । ऋष्य । पुट । द्रुण । द्रोण । हरिण । कण । पटर । उकण । आमलक । कुवल । बदर । बिम्ब । तर्कार । शर्कार । पुष्कर । शिखण्ड । सुषम । सलन्द । गडुज । आनन्द । सृपाट । सृगेठ । आढक । शष्कुल । सूर्म । सुब । सूर्य । पूष । मूष । घातक । सकलूक । सल्लक । मालक । मालत । साल्वक । वेतस । अतस । पृस । मह । मठ । छेद । श्वन् । तक्षन् । अनडुही । अनड्वाही । एषण, करणे । देह । काकादन । गवादन । तेजन । रजन । लवण । पान । मेघ । गौतम । आप । स्थूण । भौरि । भौलिकि‖‖ । भौलिङ्गि । औद्गाहमानि । आलिङ्गि । आपिच्छिक । आरट । टोट । नट । नाट । सूलाट । ज्ञातन‡ । पातन पावन । आस्तरण । अधिकरण । एत । अधिकार । आग्रहायणी । प्रत्यवरोहिणी । सेवन । सुमङ्गलात् । संज्ञायाम् । सुन्दर । मण्डल । पट । पिण्ड । विकट । कुर्द । गूर्द । पाण्ट । लोफाण्ट । कन्दर । कन्दल । तरुण । तलुन । बृहत् । महत् । सौधर्म्म । रोहिणी, नक्षत्रे । रेवती, नक्षत्रे । विकल । निष्कल । पुष्कल ॥ कटाच्छ्रोणिवचने । पिङ्गल । भट्ट । दहन । कन्द । काकण । पिप्पलादयश्च ।

+ अर्थात् षित्प्रत्यान्तेभ्यः । सं० ।

‖ शिल्पिनीष्वुन । अ० ३ । १ । १४५ इत्येनष्वुन प्र० । सं० ॥

‖‖ भौलिकि, इति पुस्तकान्तरे । सं० ॥

‡ 'ज्ञातन' इति पुस्तकान्तरे । सं० ॥

पिप्पली। हरीतकी। कोशातकी। शमी। करीरी। पृथिवी (१)। क्रोष्ट्री। मातामह (२)। पितामह। इति गौरादयः॥

३८—बह्वादिभ्यश्च॥ अ० ४। १। ४५॥

बह्वादिप्रातिपदिकेभ्यः स्त्रियां वा ङीष् प्रत्ययो भवति। बह्वी। बहुः।

बहु। पद्धति। अङ्कति। अञ्चति। अंहति। वहति। शकटि॥ शक्तिः शस्त्रे॥ शारि। वारि। गति। अहि। कपि। मुनि। यष्टि॥ इतः प्राण्यङ्गात्॥ कृदिकारादक्तिनः॥ सर्वतोऽक्तिन्नर्थादित्येके (३)॥ चण्ड। अराल। कमल। कृपाण। विकट। विशाल। विशंकट। भरुज। ध्वज॥ चन्द्रभागान्नद्याम्॥ चन्द्रभागी। कल्याण। उदार। पुराण। अहर्×॥ इति बह्वादयः॥

(१) पृथिवीशब्दे औणादिकः षिवन् प्रत्ययस्य* षित्वान् ङीषि सिद्धे उणादिनामव्युत्पन्नत्वद्योतनार्थः पाठः॥

(२) अत्र डामहच्‡ प्रत्ययस्य षित्वादेव ङीषि सिद्धे पुनः पाठेन षिल्लक्षणस्य ङीषोऽनित्यत्वं ज्ञाप्यते तेन दंष्ट्रा, इति सिद्धं भवति॥

(३) इकारान्तात् प्राण्यङ्गवाचकान् ङीष् भवति। अंगुली। इकारान्तात् कृदन्तात् स्त्रियां ङीष्। कृषी। भूमी। वापी। केषांचिन्मते क्तिन्नधिकारस्थादिकारान्तमात्रादेव ङीष् न भवति। तदा कृषिः। वापिः। इत्येव॥

‡ प्रथेः षिवन् षवन् ष्वनः संप्रसारणञ्च, १। १। १५० इत्यनेन षिवन् प्र०। सं०॥

* पितृव्य मातुलमातामहपितामहाः, अ० ४। २। ३६ इत्यनेन डामहच् प्र०॥

× 'अहन्' इति पुस्तकान्तरे। सं०॥

३९—न क्रोड़ादि बह्वचः ॥ अ० ४ । १ । ५६ ॥

क्रोडाद्यन्ताद् बह्वजन्ताच्च प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो न भवति । स्वाङ्गादिति* प्राप्तः प्रतिषिध्यते । शोभनक्रोडा । शोभनखुरा । पृथुजघना ।

क्रोड । खुर । बाल । शफ । गुद । घोण । नख । मुख । भग । गल । आकृतिगणोऽयम् । इति क्रोडादयः ॥

४०—शार्ङ्गरवाद्यञो ङीन् ॥ अ० ४ । १ । ७३ ॥

शार्ङ्गरवादिभ्योऽञन्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीन् प्रत्ययो भवति । शार्ङ्गरवी । बैदी । जातिग्रहणमत्रानुवर्त्तते† तेन जातिलक्षणो ङीषनेन बाध्यते न पुंयोगलक्षणः ।

शार्ङ्गरव । कापटव । गौगुलव । ब्राह्मण । गौतम । कामण्डलेन । ब्राह्मकृतेय । आनिचेय । आनिधेय । आशोकेय । वात्स्यायन । माञ्जायन । कैकसेय । काव्य । शैव्य । एहि । पर्य्येहि । आश्मरथ्य । औदपान । अराल । चण्डाल । वतण्ड । भोगवद्गौरिमतोः संज्ञायाम् ॥ भोगवती । गौरिमती ॥ नृनरयोर्वृद्धिश्च ॥ नारी । इति शार्ङ्गरवादयः ॥

४१—क्रौड्यादिभ्यश्च ॥ अ० ४ । १ । ८० ॥

क्रौड्यादिप्रातिपदिकेभ्यः स्त्रियां ष्यङ् प्रत्ययो भवति । अगुरूपोत्तमार्थ× आरम्भः । क्रौड्या । लाड्या ।

---

* अ० ४ । १ । ५४ ॥

† जातेर० ४।१।६४ इत्यस्मात् सूत्रात् । सं० ॥

× अणिञोरना० अ० ४ । १ । ७८ इत्यनेनाप्राप्तौ सत्यामनेन ष्यङ् प्रत्यय, इत्यर्थः । सं० ॥

कौडि । लाडि । व्याडि । आपिशलि । आपक्षिति । चौपयत । चैटयत । शैकयत । वैल्वयत । वैकल्पयत । सौधातकि ॥ सूतात् युवत्याम् । सूत्या, युवतिः ॥ भोज, क्षत्रिये ॥ भोज्या, क्षत्रिया । भौरिकि । भौलिकि । शाल्मलि । शालास्थलि । कापिष्ठलि । गौकक्ष्य‡ ॥ इति कौड्यादयः ॥

४२—अश्वपत्यादिभ्यश्च ॥ अ० ४ । १ । ८४ ॥

अश्वपत्यादिप्रातिपदिकेभ्यः प्राग्दीव्यतीयेष्वर्थेष्वण् प्रत्ययो भवति । पत्युत्तरपदात्+ प्राप्तस्य ण्यस्यापवादः । आश्वपतम् । शातपतम् ।

अश्वपति । शतपति । धनपति । गणपति । राष्ट्रपति । कुलपति । गृहपति । धान्यपति । पशुपति । धर्मपति । सभापति । प्राणपति । क्षेत्रपति । स्थानपति । यज्ञपति । धन्वपति । अधिपति । बन्धुपति । इत्यश्वपत्यादयः ॥

४३—उत्सादिभ्योऽञ् ॥ अ० ४ । १ । ८६ ॥

उत्सादिभ्यः प्राग्दीव्यतीयेष्वर्थेष्वञ् प्रत्ययो भवति । औत्सः । औदपानः । अणस्तदपवादानां च बाधकः ।

उत्स । उपदान । विकर । विनोद । महानद । महानस । महाप्राण । तरुण । तलुन । वष्कयासे (१) ॥ धेनु । पृथिवि । पंक्ति । जगती । त्रिष्टुप् । अनुष्टुप् । जनपद । भरत । उशीनर । ग्रीष्म । पीलु । कुल । उदस्थान, देशे ॥ पृष, दंशे (२) भल्लकीय ।

(१) वष्कयशब्दादसेऽर्थात् केवलादेवाञ् । तदन्तात्त्वणेव भवति ॥
(२) उदस्थानशब्दाद्देशार्थं एवाञ् । अन्यार्थेऽणेव भवति । एवमन्यत्रापि ॥

‡ 'गौलक्ष्य' इति पुस्तकान्तरे । सं० ॥

+ अ० ४ । १ । ८५ ॥

रथन्तर। मध्यन्दिन। वृहत्। महत्। सत्वन्तु। (१)। कुरु। पञ्चाल। इन्द्रावसान। उष्णिक्। ककुप्। सुवर्ण। सुपर्ण। देव। ग्रीष्मादच्छन्दसि (२)॥ इत्युत्सादयः॥

४४—बाह्वादिभ्यश्च॥ अ० ४। १। ९६॥

बाह्वादिशब्देभ्योऽपत्यसामान्ये इञ् प्रत्ययो भवति। बाहोरपत्यं बाहविः। सौमित्रिः। इत्यादि।

बाहु। उपबाहु। विवाकु। शिवाकु। वटाकु। उपबिन्दु। वृक। चूडाला। मूषिका। बलाका। भगला। छगला। ध्रुवका। धुवका। सुमित्रा। दुर्मित्रा। पुष्करसत्। अनुहरत्। देवशर्मन्। अग्निशर्मन्। कुनामन्। सुनामन्। पञ्चन्। सप्तन्। अष्टन्॥ अमितौजसः सलोपश्च (३)॥ उदञ्चु। शिरस्। शराविन्। क्षेमवृद्धिन्। शङ्खलातोदिन्‡। खरनादिन्। नगरमर्दिन्। प्राकारमर्दिन्। लोमन्। अजीगर्त्त। कृष्ण। सलक। युधिष्ठिर। अर्जुन। साम्ब। गद। प्रद्युम्न। राम। उदङ्कः संज्ञायाम्॥ सम्भूयोऽम्भसोः सलोपश्च (४)॥ आकृतिगणोऽयम् (५)॥ इति बाह्वादयः॥

(१) अत्र सत्व शब्दान्मतुप्—सत्वन्, तु, अव्ययम्। सत्वतोऽपत्यं सात्वताः॥

(२) अत्र छन्दःशब्देन वृत्तं गृह्यते न तु वेदः। ततोऽन्यत्राण्॥

(३) आमितौजसोऽपत्यमामितौजिः॥

(४) सम्भूयसोऽपत्यं साम्भूयिः। आम्भिः॥

(५) सूत्रस्थचकारेणात्राऽऽकृतिगणत्वं बोध्यते। तेन जाम्बिः ऐन्द्रशर्म्मिः। आजधेनविः। आजबन्धविः। औडुलोमिः। इत्यादिष्विञ् सिद्धो भवति॥

‡ 'श्रङ्खलातोदिन्' इति पुस्तकान्तरे॥ सं०॥

४५—गोत्रे कुञ्जादिभ्यश्च्फञ् ॥ अ० ४ । १ । ९८ ॥

गोत्रसंज्ञकेऽपत्ये वाच्ये कुञ्जादिभ्यश्च्फञ् प्रत्ययो भवति । इञोऽपवादः । कुञ्जस्य गोत्रापत्यं कौञ्जायन्यः । कौञ्जायन्यौ । कौञ्जायनाः । स्वार्थे ञ्यस्तस्य तद्राजत्वाद्बहुषु लुक् + । गोत्र इति किम् । कुञ्जस्यानन्तरापत्यं कौञ्जिः ।

कुञ्ज । ब्रध्न । शङ्ख । भस्मन् । गण । लोमन् । शठ । शाक । शाकट । शुण्डा । शुभ । विपाश । स्कन्द । स्कम्भ । शुम्भा । शिव । शुभया । इति कुञ्जादयः ॥

४६—नडादिभ्यः फक् ॥ अ० ४ । १ । ९९ ॥

नडादिप्रातिपदिकेभ्यो गोत्रापत्ये फक् प्रत्ययो भवति । नडस्य गोत्रापत्यं नाडायनः । चारायणः ।

नड । चर । बक । मुञ्ज । इतिक । इतिश । उपक । लमक ॥ शलंकुशलङ्कञ्च ( १ ) ॥ सप्तल । वाजप्य । तिक । अग्निशर्मन् । वृषगणे । प्राण । नर । सायक । दास । मित्र । द्वीप । पिङ्गर । पिङ्गल । किङ्कर । किङ्कल । कातर । कातल । काश्य । काश्यप । काव्य । अज । अमुष्य ॥ कृष्णरणौ ब्राह्मणवासिष्ठयोः ( २ ) ॥ अमित्र । लिगु । चित्र । कुमार । क्रोष्टु ‡ क्रोष्टञ्च ( ३ ) ॥ लोह । दुर्ग । स्तम्भ । शिंशपा । अग्र । तृण । शकट । सुमनस् । सुमत ।

( १ ) शलङ्कुशब्दस्य शलङ्कादेशः शलङ्कोरपत्यं शालङ्कायनः ॥

( २ ) कृष्णस्यापत्यं कार्ष्णायनो ब्राह्मणः । राणायनो वासिष्ठः ॥

( ३ ) क्रोष्टोरपत्यं क्रौष्टः ॥

+ तद्राजस्य बहुषु० अ० २ । ४ । ६२ इत्यनेन लुक् । सं० ॥

‡ क्रोष्टोः स्थाने क्रोष्ट्वादेशः । इत्यर्थः । सं० ॥

मिमत् । ऋक् । जत् । युगन्धर । हंसक । दण्डिन् । हस्तिन् । पञ्चाल । चमसिन् । सुकृत्य । स्थिरक । ब्राह्मण । चटक । बदर । अश्वक । खरप । कामुक । ब्रह्मदत्त । उदुम्बर । शोण । अलोह । दण्ड । एक । वानव्य । शावक । नाव्य । अन्वजत् । अन्तजन । इत्वरा । अंशक । अश्वला । अध्वर । दण्डप । इति नडादयः ॥

४७—अनृष्यानन्तर्ये विदादिभ्योऽञ् ॥अ०४।१।१०४॥

विदादिप्रातिपदिकेभ्यो गोत्रापत्येऽञ् प्रत्ययो भवति । येऽत्र गणेऽनृषिवाचकास्तेभ्यस्त्वनन्तरापत्य एव । विदस्य गोत्रापत्यं वैदः । पुत्रस्यानन्तरापत्यं पौत्रः । दौहित्रः ।

विद । उर्व । कश्यप । कुशिक । भरद्वाज । उपमन्यु । किलालप । किदर्भ । विश्वानर । ऋष्टिषेण । ऋषभाग । हर्यश्व । प्रियक । आपस्तम्ब । कूचवार । शरद्वत् । शुनक । धेनु । गोपवन । शिग्रु । बिन्दु । भाजन । अश्वावतान । श्यामाक । श्यमाक । श्यापर्ण । हरित । किन्दास । वह्यस्क । अर्कलूष । वध्योष । विष्णुवृद्ध । प्रतिबोध । रथन्तर । रथीतर । गविष्ठिर । निषाद । मठर । मृद । पुनर्भू । पुत्र । दुहितृ । ननान्दृ ॥ परस्त्री, ‡ परशुं च (१) ॥ किता । सम्बक । शावली । श्यायक । अलस । इति विदादयः ॥

४८—गर्गादिभ्यो यञ् ॥ अ० ४ । १ । १०५ ॥

गर्गादिभ्योऽन्तरे गोत्रापत्ये यञ् प्रत्ययो भवति । गार्ग्यः । अनन्तरापत्ये तु गार्गिरित्येव ।

(१) परस्त्रिया अपत्यं पारशवः ॥

‡ परस्त्रियः स्थाने परशुं चादेश इत्यर्थः । सं० ॥

गर्ग। वत्स। वाजाऽसे (१)। संकृति। अज। व्याघ्रपात्। विदभृत्। प्राचीनयोग। अगस्ति। पुलस्ति। रेभ। अग्निवेश। शङ्ख। शठ। धूम। अवट। चमस। धनञ्जय। मनस। वृक्ष। विश्वावसु। जनमान। लोहित। संशित। बभ्रु। मण्डु। मक्षु। अलिगु। शङ्कु। लिगु। गुलु। मन्तु। जिगीषु। मनु। तन्तु। मनायी। सूत। कथक। कष। तण्ड। वतण्ड। कपि। कत। कुरुकत। अनडुह्। कण्व। शकल। गोकक्ष। अगस्त्य। कुण्डिन। यज्ञवल्क। उभय। जात। विरोहित। वृषगण। रहूगण। शाण्डिल। वन। कचुलुक। मुद्गल। मुसल। पराशर। जतूकर्ण। मन्त्रित। संहित। अश्मरथ। शर्कराक्ष। पूतिमाष। स्थूण। अररक। पिङ्गल। कृष्ण। गोलुन्द। उलूक। तितिक्ष। भिषज्। भडित। भण्डित। दल्भ। चिकित। देवहू। इन्द्रहू। एकलू। पिप्पलु। बृहदग्नि। जमदग्नि। सुलोभिन्। उकत्थ। कुटीगु। इति गर्गादयः॥

४६—अश्वादिभ्यः फञ्॥ अ० ४। १। ११०॥

अश्वादिभ्यो गोत्रापत्ये फञ् प्रत्ययो भवति। आश्वायनः। आश्मायनः। येऽस्मिन् गणेऽपत्यैकप्रत्ययान्ताः पठ्यन्ते तेषु साम-र्थ्याद्युनिप्रत्ययो विज्ञायते।

अश्व। अश्मन्। शङ्ख। विद। पुट। रोहिण। खर्जूर। खर्जूल। पिञ्जूर। भडिल। भण्डिल। भडित। भण्डित। भण्डिक। प्रहृत। रामोद। क्षत्र। ग्रीवा। काश। गोलाङ्क्य। अर्क। स्वन। ध्वन। पाद। चक्र। कुल। पवित्र। गोमिन्। श्याम। धूम। धूम्र। वाग्मिन्। विश्वानर। कुट। वेश। आत्रेय।

(१) असेऽसमासे वाजशब्दाद्यञ्। सुवाजस्यापत्यं सौवाजिः अत्र यञ् न भवति॥

नक्त । तड । नड । ग्रीष्म । अर्ह ॥ विशम्य । विशाला । गिरि । चपल । चुनम । दासक । वैल्य । धर्म । आनडुह्य । पुंसिजात । अर्जुन । शूद्रक । सुमनस् । दुर्मनस् । क्षान्त । प्राच्य । कित । काण । चुम्प । श्रविष्ठा । वीरक । पविन्दा । कुत्स । आतव । कितव । शिव । खदिर ॥ आत्रेय, भारद्वाजे । भारद्वाज, आत्रेये (१) ॥ पथ । कन्थु । ऋच । सुनु । कर्कटक । रुक्त । तरुक्त । तलुक्त । प्रचुल । विलम्ब । मिष्णुज । इत्यश्वादयः ॥

५०—शिवादिभ्योऽण् ॥ अ० ४ । १ । ११२ ॥

शिवादिभ्यः सामान्यापत्येऽण् प्रत्ययो भवति । यथाप्राप्ताना-मिञादीनामणपवादानां च बाधकः । शिवस्यापत्यं शैवः ।

शिव । प्रोष्ठ । प्रोष्ठिक । चण्ड । मण्ड । जम्भ । मुनि । सन्धि । भूरि । कुठार । अनभिम्लान । अनभिग्लान । ककुत्स्थ । कहोड । लेख । रोध । खञ्जन । कोहड । पिष्ट । हेहय । खञ्जार । खञ्जाल । सुरोहिका । पर्ण । कहूष । परिल । वतण्ड । तृण । कर्ण । क्षीरहद । जलहद । परिषिक । जटिलिक । गोफिलिक । बधिरिका । मञ्जीरक । वृष्णिक । रेख । आलेखन । विश्रवण । खण । वर्त्तनाक्ष । पिटक । पिटाक । तृक्षाक । नभाक । ऊर्णनाभ । जरत्कारु । उत्क्षिपा । रोहितिक । आर्यश्वेत । सुपिष्ट । खर्जूर-कर्ण । मसूरकर्ण । तूनकर्ण । मयूरकर्ण । खडरक । तक्षन् । ऋष्टिषेण । गङ्गा । विपाशा । यस्क । लह्य । द्रुघ । अयःस्थूण । भलन्दन । विरूपाक्ष । भूमि । इला । सपत्नी ॥ द्व्यचो । नद्याः ॥

(१) आत्रेयशब्दाद् भारद्वाजगोत्रे फञ् । आयत्रेयाणो भारद्वाजः । भारद्वाज शब्दादात्रेयगोत्रे फञ् । भारद्वाजायन आत्रेयः ॥

त्रिवेणी, त्रिवणं च (१)। कद्रुय। कन्नोध। परल। ग्रीवाक्ष। गोभिलिक। राजल। तडाक। वडाक। इति शिवादयः॥

## ५१—शुभ्रादिभ्यश्च ॥ अ० ४। १। १२३॥

शुभ्रादिप्रातिपदिकेभ्योऽपत्ये ढक् प्रत्ययो भवति। यथाप्राप्त-मिनञादीनामपवादः। शुभ्रस्यापत्यं शौभ्रेयः।

शुभ्र। विष्टपुर। ब्रह्मकृत। शतद्वार। शतावर। शलाका। शालाचल। शलकाभ्रू। लेखाभ्रू। विमातृ। विधवा। कृकसा। रोहिणी। रुक्मिणी। दिशा। शालूक। अजवस्ति। शकन्धि। लक्ष्मणश्यामयोर्वसिष्ठे (२)॥ गोधा। कृकलास। अणीव प्रवाहिण। भरत। भारत। भारम। मृकण्डु। मघष्टु। मकष्टु। कर्पूर। इतर। अन्यतर। आलीढ। सुदत्त। सुचक्षस। सुनामन्। कद्रु। तुद। अकशाप। कुमारिका। किशोरिका। कुवेणिका। जिह्वा-शिन। परिधि। वायुदत्त। शकल। खट्वर। अम्बिका। अशोका। शुद्धपिङ्गला। खडोन्मत्ता। अनुदृष्टि। जरतिन्। बलिवर्दिन्। विग्रज। बीज। श्वन्। अश्मन्। अश्व। अजिर। स्थूल। सृकण्डु। यकथु। यमष्टु। कष्टु। सृकण्ड। मृकण्ड। गुद। रूद। कुशेरिका। शकल। शबल। उग्र। अजिन। इति शुभ्रादयः॥

## ५२—कल्याण्यादीनामिनङ् ॥ अ० ४। १। १२६॥

(२) स्त्रीवाचकाद् द्व्यच इति सूत्रेण ढक् प्राप्तः स नदीवाचका-न्माभूत। रेवाया अपत्यं रैवः। त्रिवेण्यास्त्रिवणादेशो विशेषः। त्रिवेण्या अपत्यं त्रैवणः॥

(२) लक्ष्मणस्यापत्यं लाक्ष्मणेयो वसिष्ठः। श्यामस्य अपत्यं श्यामेयो वशिष्ठः। मानुषी वाचकात् श्यामाशब्दादण् प्राप्तः सोऽनेन बाध्यते॥

कल्याण्यादिप्रातिपदिकेभ्योऽपत्ये ढक् प्रत्ययो भवति तस्मिन् सति इनङादेशः। कल्याण्या अपत्यं काल्याणिनेयः। सौभागिनेयः (१)॥

कल्याणी। सुभगा। दुर्भगा। बन्धकी। अनुदृष्टि। अनुसृष्टि। जरती। बलीवर्दी। ज्येष्ठा। कनिष्ठा। मध्यमा। परस्त्री। इति कल्याण्यादयः॥

## ५३—गृष्ट्यादिभ्यश्च॥ अ० ४। १। १३६॥

गृष्ट्यादिप्रातिपदिकेभ्योऽपत्ये ढञ् प्रत्ययो भवति। अणादीनामपवादः। गृष्टेरपत्यं गार्ष्टेयः॥

गृष्टि। हृष्टि। हलि। वलि। विश्रि। कुद्रि। अजवस्ति। मित्रयु। फलि। अलि। दृष्टि। इति गृष्ट्यादयः॥

## ५४—रेवत्यादिभ्यष्ठक्॥ अ० ४। १। १४६॥

रेवत्यादिभ्योऽपत्ये ठक् प्रत्ययो भवति। ढगादीनामपवादः‡। रेवत्या अपत्यं रैवतिकः॥

रेवती। अश्वपाली। मणिपाली। द्वारपाली वृकवञ्चिन्। वृकग्राह। कर्णग्राह। दण्डग्राह। कुक्कुटाक्ष। वृकबन्धु। चामरग्राह। ककुदाक्ष। इति रेवत्यादयः॥

---

(१) कल्याण्यादिभ्यो ढक् तु सिद्ध आदेशार्थं वचनम्, हृद्भगसिन्ध्वन्त+ इत्युभयपदवृद्धिः॥

---

‡ 'स्त्रीभ्यो ढक्' अ० ४। १। १७ इत्यादि सूत्रप्राप्तानां ठगादिनामित्यर्थः सं०॥

५५—कुर्वादिभ्यो ण्यः ॥ अ० ४ । १ । १५१ ॥

कुर्वादिप्रातिपदिकेभ्योऽपत्ये ण्यः प्रत्ययो भवति । कुरोरपत्यं कौरव्यः । काव्यः ॥

कुरु । गर्ग । मङ्गुष । अजमारक । रथकार । वावदूक । सम्राजः क्षत्रिये (१) । कवि । मति । वाक् । पितृमत् । इन्द्रजालि । दामोष्णीषि । गणकारि । कैशोरी कापिञ्जलादि । कुट । शलाका । मुर । एरक । अभ्र । दर्भ । केशिनी । वेनाच्छन्दसि ॥ शूर्पणाय । श्यावनाय । श्यावरथ । श्यावपुत्र । सत्यंकार । वडभीकार । शङ्कु । शाक । पथिकारिन् । मूढ । शंकन्धु । कर्त्तृ । हर्त्तृ । शाकिन् । इनपिण्डी । विस्फोटक । काक । फाण्टंक । शाकिन् । घातकि । धेनुजि । बुद्धिकार । वामरथस्य कण्वादिवत् स्वरवर्जम् (२) । इति कुर्वादयः ॥

५६—तिकादिभ्यः फिञ् ॥ अ० ४ । १ । १५४ ॥

तिकादिप्रातिपदिकेभ्योऽपत्ये फिञ् प्रत्ययो भवति । तिकस्यापत्यं तैकायनिः । कैतवायनिः ॥

(१) सम्राट् शब्दात् क्षत्रिये वाच्ये ण्यो भवति । सम्राजोऽपत्यं साम्राज्यः क्षत्रियः ॥

(२) वामरथशब्दाण्ण्यप्रत्ययो भवति कण्वादिवच्च स्वरवर्जं कार्यमतिदिश्यते । कण्वादयो गर्गाद्यन्तर्गतास्तेभ्यः शैषिकोऽण्‡ यथा काण्व्यस्येमे छात्राः काण्वाः । एवं वामरथादपि शैषिकोऽण् वामरथस्य छात्रा वामरथाः । बहुवचने यञ्वण्ण्यस्याऽपि+ लुक् । वामरथाः । यञश्चेति ङीप् । वामरथी । इत्यादि स्वरस्त्वन्तोदात्त एव ॥

‡ कण्वादिभ्यो गोत्रे । अ० ४ । २ । १११ इत्यनेन । सं० ॥

+ 'यञञोश्च' अ० २ । ४ । ६४ इत्यनेन । सं० ॥

तिक। कितव। संज्ञा। बाल। शिखा। उरस। शाठ्य। सैन्धव। यमुन्द। रूप्य। ग्राम्य। नील। अमित्र। गौकक्ष्य। कुरु। देवरथ। तैतिल। औरस। कौरव्य। भौरिकि। भौलिकि। चौपयत †। चैटयत। शैकयत। क्षैतयत। ध्वाजवत। चन्द्रमस्। शुभ। गङ्गा। वरेण्य। सुयामन्। आरद्ध। वह्यका। खल्य। वृष (१)। लोमक। उदन्य। यज्ञ। ऋष्य। भीत। जाजल। रस। लावक। ध्वजवद्। वसु। बन्धु। आवन्धका। सुपामन्। इति तिकादयः।

५७—वाकिनादीनां कुक् च ॥ अ० ४। १। १५८॥

वाकिनादिशब्देभ्योऽपत्ये फिञ् प्रत्ययो भवति। तत्सन्नियोगेन चैषां कुगागमः वाकिनस्यापत्यं वाकिनकायनिः॥

वाकिन। गारेध। काकठ्य ‡। काक। लङ्का॥ चर्मिवर्मिणोर्नलोपश्च (२)॥ इति वाकिनादयः॥

५८-वा०-कम्बोजादिभ्यो लुग्वचनम्॥ अ० ४। १। १७५॥

कम्बोजादिशब्देभ्योऽपत्ये तद्राजनि* विहितस्य + लुग्भवति। कम्बोजस्यापत्यं तद्राजो वा कम्बोजः।

---

(१) फिञ् प्रत्ययसम्बन्धे वृषशब्दस्य यकारान्तत्वं महाभाष्ये कृतम्। वृषस्यापत्यं वार्ष्यायणिः॥

(२) चार्मिकायणिः। वार्मिकायणिः॥

---

† 'चौपयत' इति पुस्तकान्तरे। सं०॥

‡ 'काकंठ्य' इति पुस्ताकान्तरे। सं०॥

* 'जनपदशब्दात् क्षत्रियादञ्' अ० ४। १। १६८ इत्यनेन विहितस्य। सं०॥

+ अञ् प्रत्ययस्य। सं०॥

कम्बोज । चोल । केरल । शक । यवन । इति कम्बोजादयः ॥

५६—न प्राच्यभर्गादियौधेयादिभ्यः ॥

अ० ४ । १ । १७८ ॥

प्राच्यक्षत्रियवाचकेभ्यो भर्गादिभ्यो यौधेयादिभ्यश्चोत्पन्नस्य तद्राजप्रत्ययस्य लुङ् न भवति । अतश्चेति+ प्राप्तः प्रतिषिध्यते । प्राच्य–पञ्चालानां राज्ञी पाञ्चाली । वैदेही । भार्गी । यौधेयी ।

भर्ग । करूष । केकय । कश्मीर । साल्व । सुस्थाल । उरश । कौरव्य । इति भर्गादयः ॥ यौधेय । शौभ्रेय । शौक्रेय‡ । ग्रावाणेय । वार्त्तेय । धार्त्तेय । त्रिगर्त्त । भरत । उशीनर । इति यौधेयादयः ॥

६०—भिक्षादिभ्योऽण् ॥ अ० ४ । २ । ३८ ॥

षष्ठीसमर्थभिक्षादिशब्देभ्यः समूहार्थेऽण् प्रत्ययो भवति । अञादिबाधनार्थमण्ग्रहणम् । भिक्षाणां समूहो भैक्षम् । गार्भिणम् ।

भिक्षा । गर्भिणी । क्षेत्र । करीष । अङ्गार । चर्मिन् । धर्मिन् । चर्मन् । धर्मन् । सहस्र । युवति । पदाति । पद्धति । अथर्वन् । अर्वन् । दक्षिण । भूत । विषय । श्रोत्र ॥ वृक्षादिभ्यः खण्डः (१) ॥ वृक्षखण्डः । वृक्ष । तरु । पादप । इति भिक्षादयः ॥

६१—खण्डिकादिभ्यश्च ॥ अ० ४ । २ । ४५ ॥

खण्डिकादिभ्यः समूहार्थेऽञ् प्रत्ययो भवति । खण्डिकानां समूहः खाण्डिकम् ।

(१) खण्डशब्दः पुस्तकान्तरपठितो न सर्वत्र क्वचित्तु वृक्षादिभ्यः षण्डः । इति पाठः । वृक्षषण्डः ॥

\+ अ० ४ । १ । १७७ ॥ सं० ॥

‡ 'शौक्तेय' इति पुस्तकान्तरे । सं० ॥

खण्डिका । वडवा ॥ क्षुद्रकमालवात्सेनासंज्ञायाम् ( १ ) ॥ भिक्षुक । शुक । उलूक । श्वन् । युग । अहन् । वरत्रा । हलबन्ध । इति खण्डिकादयः ॥

६२—पाशादिभ्यो यः ॥ अ० ४ । २ । ४९ ॥

षष्ठीसमर्थपाशादिभ्यः समूहार्थे यः प्रत्ययो भवति । पाशानां समूहः पाश्या रज्जुः । तृण्या ।

पाश । तृण । धूम । वात । अङ्गार । पोत । बालक । पिटक । पाटक । शकट । हलू । नड । वन । पाटलका । गल । इति पाशादयः ॥

६३—राजन्यादिभ्यो वुञ् ॥ अ० ४ । २ । ५३ ॥

राजन्यादिप्रातिपदिकेभ्यो "विषयो देशे" इत्येतस्मिन्नर्थे वुञ् प्रत्ययो भवति । राजन्यानां विषयो देशः राजन्यकः ।

राजन्य । देवयान । शालङ्कायन । जालन्धरायण । आत्मकामेय । अम्बरीषपुत्र । वसाति । वैल्वान । शैलूष । उदुम्बुर । वैल्वबल । आर्जुनायन । संप्रिय । दाक्षि । ऊर्णनाभ । आप्रीत । अव्रीड । वैतिल । वात्रक ( २ ) । इति राजन्यादयः ॥

( १ ) क्षुद्राश्च मालवाश्चेति क्षत्रियद्वन्द्वः । ततः पूर्वेणैवाञि‡ सिद्धे गोत्रवुञ्+ बाधनार्थं वचनम् । क्षुद्रकमालवानां समूहः क्षौद्रकमालवी सेना । सेनासंज्ञेति नियमार्थम् । अन्यत्राञ् न भवति । क्षौद्रकमालवकम् ॥

( २ ) अयमाकृतिगणस्तेन मालवानां विषयो देशः मालवकः । वैराटकः । त्रैगर्त्तकः । इत्यादयः शब्दाः सिद्धा भवन्ति ॥

‡ अनुदात्तादेरञ् । अ० ४ । २ । ४ ॥ इत्यनेन । सं० ॥

+ गोत्रोक्षोष्ट्रो० अ० ४ । २ । ३९ इत्यनेन वुञ् प्र० । सं० ॥

## ६४—भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ

॥ अ० ४ । २ । ५४ ॥

"विषयो देशे" इत्येतस्मिन् विषये षष्ठीसमर्थेभ्यो भौरिक्यादिभ्य ऐषुकार्यादिभ्यश्च यथासंख्यं विधल्भक्तलौ प्रत्ययौ भवतः । अणोऽपवादः । भौरिकीणां विषयो देशः, भौरिकिविधः । ऐषुकारिभक्तः ॥

भौरिकि । भौलिकि । वैपेय । चैटयत । काणेय । वाणिजक । कालिज* । वालिज्यक । शैकयत । वैकयत । इति भौरिक्यादयः ॥ ऐषुकारि । सारस्यायन । चान्द्रायण । द्व्याक्षायण । त्र्यायण । औडायन । जौडायन† । खाडायन । सौवीर । दासमित्रि । दासमित्रायण । शौद्रायण । दाक्षायण । शयण्ड । तार्क्ष्यायण । शौभ्रायण । सायण्डि । शौण्डि । वैश्वमाणव । वैश्वधेनव । नद । तुण्डदेव । अक्षायत । औलालायत । शौण्ड । शयाण्ड‡ । वैश्वदेव । इत्यैषुकार्य्यादयः ॥

## ६५—क्रतूक्थादिसूत्रान्ताट्ठक् ॥ अ० ४ । २ । ६० ॥

तदधीते तद्वेदेत्यस्मिन् विषये क्रतुविशेषवाचिभ्य उक्थादिभ्यः सूत्रान्ताच्च प्रातिपदिकाट्ठक् प्रत्ययो भवति । अणोऽपवादः । अग्निष्टोममधीते वेद वा आग्निष्टोमिकः । वाजपेयिकः । औक्थिकः । वार्त्तिकसूत्रमधीते वार्त्तिकसूत्रिकः । सांग्रहसूत्रिकः ।

उक्थ । लोकायत । न्याय । न्यास । निमित्त । पुनरुक्त । निरुक्त । यज्ञ । चर्चा । धर्म । क्रमेतर । श्लक्ष्ण । संहिता ।

---

* 'वर्तल्ज' इति पुस्तकान्तरे । सं० ॥

† 'जौलायन' इति पुस्तकान्तरे । सं० ॥

‡ 'विशदेव' इत्यधिकं पुस्तकान्तरे । सं० ॥

पद । क्रम । संघात । वृत्ति । संग्रह । गुणागुण । आयुर्वेद ॥ द्विपदी, ज्योतिषि (२) ॥ अनुपद । अनुकल्प । अनुगुण । इत्युकूथादयः ॥

६६—क्रमादिभ्यो वुन् ॥ अ० ४ । २ । ६१ ॥

तदधीते तद्वेदेत्यर्थे क्रमादिभ्यो वुन् प्रत्ययो भवति । क्रममधीते क्रमकः । पदकः । क्रम । पद । शिक्षा । मीमांसा । सामन् । इति क्रमादयः ॥

६७—वसन्तादिभ्यष्ठक् ॥ अ० ४ । २ । ६३ ॥

तदधीते तद्वेदेत्यस्मिन् विषये वसन्तादिप्रातिपदिकेभ्यष्ठक् प्रत्ययो भवति । वसन्तसहचरितो ग्रन्थो वसन्तस्तमधीते वेद वा स वासन्तिकः । वार्षिकः । एवं सर्वत्र ।

वसन्त । वर्षा । शरद् । हेमन्त । शिशिर । प्रथम । गुण । चरम । अनुगुण । अपर्वन् । अथर्वन् । इति वसन्तादयः ॥

६८—संकलादिभ्यश्च ॥ अ० ४ । २ । ७५ ॥

संकलादिप्रातिपदिकेभ्यश्चातुरर्थिकोऽञ् प्रत्ययो भवति । अणोऽपवादः । पुष्कला अस्मिन् सन्तीति पौष्कलो देशः । सिकताया अदूरभवो ग्रामः सैकतः । यथासम्भवमर्थसम्बन्धः ।

संकल । पुष्कल । उद्वर्प† । उडुप । उत्पुट । कुम्भ । विधान । सुदक्ष । सुदत्त । सुभूत । सुनेत्र । सुपिङ्गल । सिकता । पूतीकी । पूलास । कूलास । पलाश । निवेश । गवेश । गम्भीर । इतर । शर्मन् । अहन् । लोमन् । वेमन् । वरुण । बहुल । सद्योज ।

(२) द्विपदीं ज्योतिःशास्त्रमधीते जानाति वा स द्वैपदिकः ॥

† 'उद्वप' इति पुस्तकान्तरे । सं० ॥

अभिषिक्त। गोभृत्। राजभृत्। गृह। भृत। भल्ल। माल। (वृत्) इति संकलादयः ॥

६९—सुवास्त्वादिभ्योऽण् ॥ अ० ४। २। ७७॥

सुवास्त्वादिप्रातिपदिकेभ्यश्चातुरर्थिकोऽण् प्रत्ययो भवति। अञोऽपवादः। सुवास्तोरदूरं नगरं सौवास्तवम्।

सुवास्तु। वर्णु। भण्डु। खण्डु। कण्डु। सेचालिन्। कर्पूरिन् ‡। शिखण्डिन्। गर्त्त। कर्कश। शटीकर्ण। कृष्ण। कर्क। कर्कन्धूमती। गोह्य। गाहि। अहिसक्थ। (वृत्) इति सुवास्त्वादयः ॥

७०—वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्य कुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः ॥ अ० ४।२।८०॥

अरीहणादिसप्तदशगणस्थप्रातिपदिकेभ्यश्चातुरर्थिका वुञादयः सप्तदशैव प्रत्यया यथासंख्येन भवन्ति। आदिशब्दः प्रत्येकमभिसंबध्यते। यथासम्भवमर्थसम्बन्धः। अरीहणादिभ्यो वुञ्। शिरीषाणामदूरभवो ग्रामः शैरीषिकः। अरीहणानां निवासो देश आरीहणकः।

अरीहण। द्रुघण। खदिर। सार। भगल। उलन्द। सांपरायण। क्रौष्ट्रायण। भास्त्रायण। मैत्रायण। त्रैगर्त्तायन। रायस्पोष। विपथ। उद्दण्ड। उदञ्चन। खाडायन। खण्ड। वीरण। काशकृत्स्न। जाम्बवन्त। शिंशपा। किरण। रैवत। वैल्व। वैमतायन। मैमतायण। सौसायन। शाण्डिल्यायन। शिरीष। बधिर।

‡ कर्पूरिन् इति पुस्तकान्तरे। सं० ॥

वैगर्त्तायण । गोमतायण । सौमतायण । खाण्डायण । विपाश । सुयज्ञ । जम्बु । सुशर्म्म । इत्यरीहणादयः ॥

कृशाश्वादिभ्यश्छण ॥ कार्शाश्वीयः । अरिष्टेन निर्वृतमारिष्टीयम् ।

कृशाश्व । अरिष्ट । अरीश्व । वेश्मन् । विशाल । रोमक । शवल । कूट । रोमन् । वर्वर । सुकर । सूकर । प्रतर । सदृश । पुरग । सुख । धूम । अजिन । विनता । वनिता । कुविद्यास † । अरुस् । अवयास । अयावस् । मौद्गल्य । इति कृशाश्वादयः ॥

ऋश्यादिभ्यः कः * ॥ न्यग्रोधानामदूरभवं वनं न्यग्रोधकम् ।

ऋश्य । न्यग्रोध । शिरा । निलीन । निवास । निधान । निवात । निबद्ध । विबद्ध । परिगूढ़ । उत्तराश्मन् । स्थूलबाहु । खदिर । शर्करा । अनडुह् । परिवंश । वेणु । वीरण । खण्ड । परिवृत्त । कर्दम । अंशु । इति ऋश्यादयः ॥

कुमुदादिभ्यष्ठच् + ॥ वल्वजाः सन्त्यस्मिन् स वल्बजिको देशः ।

कुमुद । शर्करा । न्यग्रोध । उत्कट । इत्कट । गर्त्त । बीज । अश्वत्थ । वल्वज । परिवाप । शिरीष । यवाष । कूप । विकङ्कत । कण्टक । कङ्कट । संकट । पलाश । त्रिक । कत । दशग्राम । इति कुमुदादयः ॥

काशादिभ्य इलः । काशाः सन्ति यत्र स काशिलो देशः ।

काश । वाश । अश्वत्थ । पलाश । पीयूष । विश । विस । तृण । नर । चरण । कर्दम । कर्पूर । कण्टक । गुह । आवास । नड । वन । वधूल । वर्वर । इति काशादयः ॥

† 'कुविवास' इति पुस्तकान्तरे ॥

* उदाहरणम्-ऋश्यकम् ॥ + उ० कुमुदिकः ॥

 

तृणादिभ्यः शः । तृणानि । यत्र सन्ति स तृणशो देशः ।

तृण । नड । वुस । पर्ण । वर्ण । चरण । अर्ण । जन । बल । लव । वन । इति तृणादयः ॥

प्रेक्षादिभ्य इनिः । प्रेक्षया निर्वृत्तः प्रेक्षी ।

प्रेक्षा । हलका । फलका । बन्धुका । ध्रुवका । क्षिपका । न्यग्रोध । इर्कुट । वुधका । संकट । कूपका । कर्कटा । सुकटा । मङ्कट× । सुक । महा । इति । प्रेक्षादयः ॥

अश्मादिभ्यो रः । अश्मना निर्वृत्तः अश्मरः ।

अश्मन् । यूप । रुष । मीन । दर्भ । वृन्द । गुड । खण्ड । नग । शिखा । यूथ । रुष । नद । नख । काट । पाम । इत्यश्मादयः ॥

सख्यादिभ्यो ढञ् ॥ सखायः सन्त्यत्र साखेयो देशः ।

सखि । सखिदत्त । वायुदत्त । गोहित । गोहिल । भल्ल । पाल । चक्रपाल । चक्रवाल । छगल । अशोक । करवीर । सीकर । सकर । सरस । समल । चर्क । वक्रपाल । उसीर† । सुरस । रोह । तमाल । कदल । सप्तल । इति सख्यादयः ॥

संकाशादिभ्यो ण्यः । सांकाश्यम् । काम्पिल्यस्यादूरभवो ग्रामः काम्पिल्यः ।

संकाश । काम्पिल्य । समीर । कश्मर । शूरसेन । सुपथिन् । सक्थच । यूप । अंश । राग । अश्मन् । कूट । मलिन । तीर्थ । अगस्ति । विरत । चिकार । विरह । नासिका । इति संकाशादयः॥

× "संकट" इति पुस्तकान्तरे । सं० ॥

† "उशीर" इति पुस्तकान्तरे । सं० ॥

बलादिभ्यो यः प्रत्ययः ॥ बलेन निर्वृत्तो बल्यः ।

बल । बुल । तुल । डल । डुल । कषल‡ । वन । कुल । इति बलादयः ॥

पक्षादिभ्यः फक् प्रत्ययः । पक्षेण निर्वृत्तः पाक्षायणः ।

पक्ष । तुष । अण्ड । कम्बलिक । चित्र । अश्मन् । अतिस्वन् ॥ पथिन्, पन्थच (१) ॥ कुम्भ । सरिज×। सरिक+। सरक । सलक । सरस । समल । रोमन् । लोमन् । हंसका । लोमक । सकर्णडक । अस्तिवल । यमल । हस्त । सिंहक । इति पक्षादयः ॥

कर्णादिभ्यः फिञ् प्रत्ययः ॥ कर्णस्य निवासः कार्णायनिः ।

कर्ण । वसिष्ठ । अलुश । शल । डुपद । अनडुह्य । पाञ्चजन्य । स्थिरा । कुलिश । कुम्भी । जीवन्ती । जित्व । आण्डीवत् । अर्क । लूष । स्फिक् । ज्ञावत् । इति कर्णादयः ॥

सुतङ्गमादिभ्यः इञ् प्रत्ययो भवति । सुतङ्गमेन निर्वृत्तः सौतङ्गमिः ।

सुतङ्गम । मुनिचित्त । विपचित्त । महापुत्र । श्वेत । गडिक । शुक्र । विग्र । बीजवापिम् । श्वन । अर्जुन । अजिर । जीव । इति सुतङ्गमादयः ॥

(१) पृथोऽदूरभवं वनं पान्थायनम् ॥

‡ "कवल" इति पुस्तकान्तरे । सं० ॥

× "सीरज" इति पुस्तकान्तरे । सं० ॥

+ "सीरक" इति पुस्तकान्तरे । सं० ॥

प्रगदिन्नादिभ्यो ञ्यः प्रत्ययो भवति ॥ प्रगदिनो यत्र सन्ति स प्रागद्यो देशः ।

प्रगदिन् । मगदिन् । शरदिन् । कलिव । खडिव । चूडार । मार्जार । कोविदार । इति प्रगदिन्नादयः ॥

वराहादिभ्यः कक् प्रत्ययः ॥ वराहाः सन्ति यत्र स वाराहको देशः । पालाशकः ।

वराह । पलाश । शिरीष । पिनद्ध । स्थूण । विदग्ध । ‡ विभग्न । बाहु । खदिर । शर्करा । विनद्ध । निबद्ध । विरुद्ध । मूल । इति वराहादयः ॥

कुमुदादिभ्यष्ठक् प्रत्ययो भवति ॥ कुमुदाः सन्ति यस्मिन् देशे स कौमुदिको देशः ।

कुमुद । गोमथ । रथकार । दशग्राम । अश्वत्थ । शाल्मली । कुण्डल । मुनिस्थूल । कूट । मुचुकर्ण । कुन्द । मधुकर्ण । शुचिकर्ण । शिरीष । इति कुमुदादयः ।

७१——वरणादिभ्यश्च ॥ अ० ४ । २ । ८२ ॥

वरणादिप्रातिपदिकेभ्य उत्पन्नस्य चातुरर्थिकप्रत्ययस्य लुब् भवति । वरणानामदूरभवं नगरं वरणाः ।

वरणाः । पूर्वौ गोदौ । पूर्वेण गोदौ । अपरेण गोदौ । आलिङ्ग्यायन । पर्णी । शृङ्गी । शल्मलयः+ । रुदाणुवी । वणिकि । वणिक् । जालपद । मथुरा । उज्जयिनी । गया ।

‡ 'विजग्ध' इत्यधिकं पुस्तकान्तरे । सं० ॥

+ 'शाल्मयः' इति पुस्तकान्तरे । सं० ॥

तक्षशिला । उरशा । आकृत्या (१) । इति वरणादयः ॥

७२—मध्वादिभ्यश्च ॥ अ० ४ । २ । ८६ ॥

मध्वादिशब्देभ्यश्चातुरर्थिको मतुप्प्रत्ययो भवति । मध्व-स्मिन्नस्तीति मधुमान् ।

मधु । विस । स्थाणु । मुष्टि । इष्टि । इक्षु । वेणु । रम्य । ऋक्ष । कर्कन्धु । शमी । किरीर । हिम । किशरा । शर्प्पणा । मरुत् । मरुव । दार्वाघाट । शर । इष्टका । तक्षशिला । शक्ति । आसन्दी । आसुति । शलाका । आमिधी । खडा । वेटा । इति मध्वादयः ।

७३—उत्करादिभ्यश्छः ॥ अ० ४ । २ । ९० ॥

उत्करादिप्रातिपदिकेभ्यश्चातुरर्थिकश्छः प्रत्ययो भवति । यथासम्भवमर्थसम्बन्धः । ‡अर्काणामदूरभवो ग्रामः, अर्कीयः ।

उत्कर । संफल । संकर । शफर । पिप्पल । पिप्पलीमूल । अश्मन् । अर्क । पर्ण । सुपर्ण । खलाजिन । इडा । अग्नि । तिक । कितव । आतप । अनेक । पलाश । तृणव । पिचुक । अश्वत्थ । +षकाक्षुद्र । भस्त्रा । विशाला । अवरोहित । गर्त्त । शाल । अन्य । जन्या । अजिन । मञ्च । चर्म्मन् । उत्क्रोश । शान्त । खदिर । शूर्पणाय । श्यावनाय । नैव । बक । नितान्त । वृक्ष । इन्द्रवृक्ष । आर्द्रवृक्ष । अर्जुनवृक्ष । इत्युत्करादयः ॥

(१) अत्र सूत्रस्थचकारेणाकृतिगणः बुध्यते । तेन कटुकवदर्य्या अदूरभवो ग्रामः कटुकवदरी । शिरीषाः । काञ्ची इत्यादिषु लुप् सिद्धो भवति ॥

‡ उत्कराणामदूरभवो देशः । उत्करीयः ॥

+ 'शकाक्षुद्र' इति पुस्तकान्तरे । सं० ॥

## ७४—नडादीनां कुक् च ॥ अ० ४ । २ । ९१ ॥

नडादिप्रातिपदिकेभ्यश्चातुरर्थिकश्छः प्रत्ययो भवति, तस्मिन् सति कुगागमश्च । यथासंभवमर्थसंबंधः । नडाः सन्ति यत्र तन्नडकीयं वनम् ।

नड । प्लक्ष । बिल्व । वेणु । वेत्र । वेतस । तृण । इक्षु । काष्ठ । कपोत ॥ क्रुञ्चाया ह्रस्वत्वं च (१) ॥ तक्षन्नलोपश्च (२) ॥ इति नडादयः ॥

## ७५—कत्र्यादिभ्यो ढकञ् ॥ अ० ४ । २ । ९५ ॥

कत्र्यादिशब्देभ्यः शेषार्थे ढकञ् प्रत्ययो भवति । कत्त्रौ भवः कात्त्रेयकः ।

कत्त्रि । उम्भि । पुष्कर । पुष्कल । मोदन । कुम्भी । कुण्डिन । नगर । वञ्जी । भक्ति । माहिष्मती । चर्मण्वती । वर्मती । ग्राम । उख्या ॥ कुल्याया यलोपश्च (३) ॥ इति कत्र्यादयः ॥

## ७६—नद्यादिभ्यो ढक् ॥ अ० ४ । २ । ९७ ॥

नद्यादिभ्यः प्रातिपदिकेभ्यः शैषिको ढक् प्रत्ययो भवति । नद्यां भवं नादेयम् ।

नदी । मही । वाराणसी । श्रावस्ती । कौशाम्बी । नव-

(१) क्रुञ्चाः सन्त्यस्मिन् तत् क्रुञ्चकीयं वनम् ॥

(२) तक्षकीयो ग्रामः ॥

(३) कुल्यायां भवः कौलेयकः । यकारलोपः ॥

कौशाम्बी। काशफरी। खादिरी। पूर्वनगरी (१)। पावा। मावा। साल्वा। दार्वा। दाल्वा। वासेनकी। वडवाया* वृषे। इति नद्यादयः॥

७७—प्रस्थोत्तरपदपलद्यादिकोपधादण्॥

अ० ४। २। ११०॥

प्रस्थोत्तरपदात् पलद्यादिभ्यः कोपधाच्च प्रातिपदिकादण् प्रत्ययो भवति शैषिकः। मद्रीप्रस्थे भवो माद्रीप्रस्थः। माहकीप्रस्थः। पलद्यां भवः पालदः। पारिषदः। कोपधात् नैलीनकः।

पलदी। परिषत्। यकृल्लोमन्। रोमक। कालकूट। पटच्चर। वाहीक। कलकीट। मलकीट। कमलकीट। कमलभिदा। कमलकीर। बाहुकीट। नैतकी। परिखा। शूरसेन। गोमती। उदपान। पद्म। कललकीट। कललकीकटा। गोष्ठी। नैधिकी। नैकेती। सकृल्लोमन्। इति पलद्यादयः॥

७८—कण्वादिभ्यो गोत्रे॥ अ० ४। २। १११॥

गोत्रप्रत्ययान्तकण्वादिप्रातिपदिकेभ्यः शैषिकोऽण् प्रत्ययो भवति। काण्व्यस्येमे काण्वाश्छात्राः गर्गाद्यन्तर्गताः कण्वादयः। अतएवात्र न लिख्यन्ते॥

७९—काश्यादिभ्यष्ठञ्ञिठौ॥ अ० ४। २। ११६॥

(१) पूर्वनगर्यां भवः पौर्वनगरेयः। अत्र पूः। वन। गिरि। इति पाठान्तरम्। तदा—पौरेयम्। वानेयम्। गैरेयमिति विभक्तं रूपत्रयं सिध्यति॥

१ वडवा शब्दाद् वृषे गम्यमाने ढक् प्रत्ययो भवति। वडवायां भवः—वाडवेयो वृषः। सं०॥

काश्यादिप्रातिपदिकेभ्यः शैषिको ठञ्ञिठौ प्रत्ययौ भवतः। प्रत्यययोर्ञकारविपर्ययभेदात् स्त्रीप्रत्यये विशेषः। ठञन्तान् ङीप्* ञिठन्तात् तु+टाबेव भवति। काश्यां भवः काशिकः। काशिकी। काशिका।

काशि। चेदि। वैदि। संज्ञा। संवाह। अच्युत। मोहमान शकुलाद। हस्तिकर्षू। कुदामन्। कुनाम। हिरण्य। करण। गोधाशन। भौरिकि। भौलिङ्गि। अरिन्दम्। सर्वमित्र। देवदत्त। साधुमित्र। दासमित्र। दासग्राम। सौधावतान। युवराज। उपराज। सिन्धुमित्र। देवराज॥ आपदादिपूर्वपदात्कालान्तात्॥ आपत्कालिकी। आपतकालिका। और्ध्वकालिकी। और्ध्वकालिका। तात्कालिकी। तात्कालिका। इति काश्यादयः॥

८०—धूमादिभ्यश्च॥ अ० ४। २। १२७॥

देशवाचिभ्यो धूमादिप्रातिपदिकेभ्यः शैषिको वुञ् प्रत्ययो भवति। अणोऽपवादः। धूमे भवो धौमकः।

धूम। खण्ड। खडण्ड। शशादन। आर्जुनाद। दाण्डायनस्थली। माहकस्थली। घोषस्थली। माषस्थली। राजस्थली। राजगृह। सत्रासाह। भक्षास्थली। भद्रकूल। गर्त्तकूल। आञ्जीकूल। द्व्याहाव। त्र्याहाव। संहीय। वर्वर। वर्चगर्त्त। विदेह। आनर्त्त। माठर। पाथेय। घोष। शिष्य। मित्र। बल। आराज्ञी। धार्त्तराज्ञी। अवयात। तीर्थ॥ कूलात्सौवीरेषु॥ समुद्रान्नावि मनुष्ये च (१)॥ कुक्षि। अन्तरीप। द्वीप।

(१) समुद्रशब्दान्नावि मनुष्ये च वाच्ये वुञ्। समुद्रे भवा सामुद्रिका नौः। सामुद्रको मनुष्यः। अन्यत्र सामुद्रं जलम्॥

* टिड्ढाणञ्० अ० ४। १। १५। इत्यनेन ङीप् प्र०। सं०॥

\+ अजाद्यतष्टाप्, अ० ४। १। ४। इत्यनेन। सं०॥

अरुण। उज्जयिनी। दक्षिणापथ। साकेत। मानवल्ली। वल्ली। सुराष्ट्री। इति धूमादयः।

८१—कच्छादिभ्यश्च ॥ अ० ४।२।१३३॥

कच्छादिदेशवाचिप्रातिपदिकेभ्यः शैषिकोऽण् प्रत्ययो भवति। वुञादेरपवादः। कच्छे भवः काच्छः।

कच्छ। सिन्धु। वर्णु। गन्धार। मधुमत्। कम्बोज। कश्मीर। साल्व। कुरु। रङ्कु। अणु। अण्ड। खण्ड। द्वीप। अनूप। अजवाह। विजापक। कुलून। इति कच्छादयः॥

८२—गहादिभ्यश्च ॥ अ० ४।२।१३८॥

गहादिप्रातिपदिकेभ्यः शैषिकश्छः प्रत्ययो भवति अणञोरपवादः। † अन्तःस्थे भव अन्तःस्थीयः।

गह। अन्तःस्थ। सम। विषम॥ मध्यमध्यमं चाण् चरणे (१)॥ उत्तम। अङ्ग। वङ्ग। मगध। पूर्वपक्ष। अपरपक्ष। अधमशाख। उत्तमशाख। समानशाख। एकग्राम। एकवृक्ष। एकपलाश। इष्वग्र। इष्वनीक‡। अवस्यन्दी। अवस्कन्द।

(१) अस्यैव सूत्रस्य शेषवार्त्तिकप्रमाणेन पृथिवीमध्यशब्दस्य मध्यमादेशश्चरणेऽभिधेये निवासलक्षणोऽण् + प्रत्ययः। अन्यत्र तु छ एव। पृथिवीमध्ये निवास एषां ते माध्यमाश्चरणाः। चरणादन्यत्र-मध्ये भवो मध्यमीयः॥

† गहे भवः गहीयः॥

+ 'सोऽस्य निवासः' अ० ४।३।८९। इत्यनेनाण् पु०। सं०॥

‡ 'इष्वनी' इति पुस्तकान्तरे पाठः। सं०॥

कामप्रस्थ । खाडायनि । खाण्डायनी । कावेरणि । कामवेरणि । शैशिरि । शौङ्गि । आसुरि । आहिंसि । आमित्रि । व्याडि । वैदजि । भौजि । आढ्यश्वि । आनृशंसि । सौवि । पारकि । अग्निशर्मन् । देवशर्मन् । श्रौति । आरटकि । वाल्मीकि । क्षेमवृद्धिन् । उत्तर । अन्तर ॥ मुखपार्श्वतसोर्लोपः ॥ जनपरयोः कुक् च ॥ देवस्य च ॥ वेणुकादिभ्यश्छण् (१) ॥ इति गहादयः ॥

८३—सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥अ० ४ । ३ । १६॥

सन्धिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवाचिभ्यः प्रातिपदिकेभ्यः शैषिकोऽण् प्रत्ययो भवति । ठञोऽपवादः । अण्ग्रहणं वृद्धाच्छस्य * बाधनार्थम् । सन्धिवेलायां जातः सान्धिवेलः । ग्रैष्मः । तैषः । पौषः ॥

सन्धिवेला । सन्ध्या । अमावास्या । त्रयोदशी । चतुर्दशी । पञ्चदशी । पौर्णमासी । प्रतिपत् ॥ संवत्सरात् फलपर्वणोः ॥ सांवत्सरं फलम् । सांवत्सरं पर्व । इति सन्धिवेलादयः ॥

८४—दिगादिभ्यो यत् ॥ अ० ४ । ३ । ५४ ॥

सप्तमीसमर्थदिगादिप्रातिपदिकेभ्यो भवार्थे यत् प्रत्ययो भवति । अणश्छस्य चापवादः । दिशि भवं दिश्यम् ।

दिश । वर्ग । पूग । गण । पक्ष । धाय्या । मित्र । मेधा । अन्तर । पथिन् । रहस् । अलीक । उखा । साक्षिन् । आदि ।

(१) मुखपार्श्वयोस्तसन्तयोरन्त्यलोपः मुखतो भवं मुखतीयम् । पार्श्वतीयम् । जने भवो जनकीयः । परकीयः । देवे भक्तिरस्य देवकीयः । वेणुकादिराकृतिगणः । वेणुकदेशे भवो वैणुकीयः । वैत्रकीयः । पालाशकीयः ॥

* अ० ४ । २ । ११४ ॥ सं० ॥

अन्त। मुख। जघन (१)। मेघ। यूथ॥ उदकात्संज्ञायाम् (२)॥ न्याय। वंश। अनुवंश। विश। काल। अप्। आकाश। इति दिगादयः॥

८५—वा०—ञ्यप्रकरणे परिमुखादिभ्य उपसंख्यानम्॥ ४। ३। ५८॥

अव्ययीभावसंज्ञकेभ्यः परिमुखादिप्रातिपदिकेभ्यो ञ्यप्रत्ययो भवति। नियमार्थं वार्त्तिकमिदम्। सूत्रेण सामान्याऽव्ययीभावाद् ञ्यः प्राप्तो नियम्यते। परिमुखं भवं पारिमुख्यम्। पारिहनव्यम्। नियमादिह न भवति। उपकूलं भवमौपकूलम्।

परिमुख। परिहनु। पर्योष्ठ। पर्युलू। औपमूल। खल। परिसीर। अनुसीर। उपसीर। उपस्थल। उपकलाप। अनुपथ। अनुखड्ग। अनुतिल। अनुशीत। अनुमाष। अनुयव। अनुयूप। अनुवंश। अनुस्वङ्ग। इति परिमुखादयः॥

८६—वा०—अध्यात्मादिभ्यश्च॥ ४। ३। ६०॥

अध्यात्मादिभ्यो भवार्थे ठञ् प्रत्ययो भवति। अध्यात्मं भवमाध्यात्मिकम्। अध्यात्म। अधिदेव। अधिभूत। आकृतिगणोऽयम्। इत्यध्यात्मादयः॥

८७—अण् ऋगयनादिभ्यः॥ अ० ४। ३। ७३॥

(१) मुखजघनशब्दाभ्यां शरीरावयवत्वादेव यति सिद्धे पुनरत्र दिगादिषु पाठोऽशरीरावयवार्थः। सेनामुखे भवः सेनामुख्यम्। सेनाजघन्यम्। सेनाया अग्रपश्चाद्भागौ गृह्येते। तदन्तविधिना यत्॥

(२) उदके भवा उदक्या रजस्वला। संज्ञाग्रहणादिह न भवति। उदके भव औदको मत्स्यः॥

